# प्रस्तावनिका ।

अथास्मिन्भारते वर्षे तीर्थराजश्रीब्रह्मपुष्करादुदीच्यां दिशि पञ्चदशयोजनानन्तरं मरुसंज्ञकदेशे श्रीवीकानेरराज्यान्तर्गत श्रीरत्नगढ नामकं नगरमस्ति । तत्र गौडवंशावतंसश्रीवसिष्ठगोत्रशुक्लयजुर्वेदमाध्यंदिनवाजसनेयीशाखापारस्करसूत्रात्रिप्रवरानुयायिना शिवालोपाह्वयेन श्रीरामकृष्णपौत्रेण श्रीकस्तूरीचन्द्रसूनुना पण्डितवैद्यश्रीचतुर्थीलाल ( चौथमल ) शर्मणा मया "शान्तिप्रकाश" नामायं ग्रंथोऽनेकनिबंधानुरोधेन कृतः । अत्र च पारस्करसूत्र–हरिहरभाष्य-शांतिरत्न-शांतिसार-विश्वकर्मप्रकाश-वसिष्ठसंहिता-कश्यपसंहिता-नारदसंहिता-मत्स्यपुराण-दानचंद्रिका-शांतिमयूख-संस्कारभास्कर इत्यादिमहानिबंधेभ्योऽनेकपद्धतिरत्नान्युपसंगृह्य प्रयोगसंग्रहोऽकारि । एतादृशोयं शांतिविधायको महानिबंधः मुंबय्याख्यराजधान्यां स्वधर्मपरायणवैश्यवंशावतंस–श्रीयुक्तश्रीकृष्णदासात्मजाय श्रेष्ठिश्रीखेमराजगुप्ताय परमसंमानतुष्टचेतसा मया प्रकाशयितुं दत्तः । तेनाऽनेकशास्त्रिभिः संशोधयित्वा स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये सीसकाक्षरैः सुंदरचिक्कणपुष्टपत्रेषु मुद्रयित्वा प्रकाशितः । तथाप्यस्य शोधनसमयेऽनवधानाद्दृग्दोषाद्वा स्थलविशेषे क्वचिद्दोषा दृक्पथमापतन्ति तर्हि सदयहृदयैर्नैसर्गिकगुणग्रहणसद्वृत्तैर्विद्वद्भिरयं ग्रंथः पात्रीकरणीय इति चिरकालं शांतिकर्माचरणशीलानामिहामुत्र च सुखकारको भूयादिति चाशास्महे । शम् ॥

भूदेवकृपाकांक्षी–

पंडितगौडश्रीचतुर्थीलाल ( चौथमल ) शर्मा, मु० रत्नगढ राज्यश्रीवीकानेर.

# अथ शांतिप्रकाशस्थविषयाणामनुक्रमणिका ।


| विषया' । | पत्राङ्का' । | विषया । | पत्राङ्का । | विषया' । | पत्राङ्काः । | विषया' । | पत्राङ्का' । |
|---|---|---|---|---|---|---|---|
| **प्रथमं प्रकरणम् १** | | अभिषेकमन्त्रा | १० | पंचलोकपालदिक्पालस्थापनम् | १९ | स्विष्टकृद्धोम. | ३५ |
| | | मातृकापूजनप्रयोग | ११ | नवग्रहपूजनम् | २१ | नवाहुतय' | ” |
| मङ्गलाचरणम् | १ | घृतमातृकास्थलमातृकापूजनम् | १२ | ग्रहाणांनैवेद्यानि. | ” | बलिदानम् | ” |
| सर्वशांत्युपयोगिशुभदिनविचार' | ” | आयुष्यमंत्रजप | ” | ग्रहस्तुतिः | ” | पूर्णाहुतिहोम | ३८ |
| वह्निवासस्तत्फलंच. | ” | सांकल्पिकनांदीश्राद्धम् | ” | रुद्रकलशस्थापनप्रयोग. | २२ | वसोर्द्धाराहोम' | ३९ |
| होमेस्विष्टाहुतिफलम् | ” | आचार्यादिवरणम् | १४ | सर्वतोभद्रदेवतापूजनपद्धतिः | २३ | आयुषकरणम् | ” |
| शांतिप्रयोगानुक्रमः | ” | दिग्रक्षण रक्षाघ्नसूक्तंच | १५ | अग्न्युत्तारणमंत्रा | २७ | होमसमाप्ति | ” |
| सर्वशांत्युपयोगिनवग्रहमखप्रयोगः | ” | पंचगव्यकरणम | ” | प्राणप्रतिष्ठाविधानम् | २८ | अभिषेकमंत्राः | ४० |
| शांतिपाठसूक्तम् | २ | भूम्यादिपूजनम् | १६ | षोडशोपचारपूजनमंत्रा. | ” | आचार्यादिभ्योदक्षिणादानम् | ४१ |
| प्रतिज्ञासंकल्प. | ३ | अग्निस्थापनप्रयोग | ” | कुशकण्डिकाविधानम् | २९ | आशीर्वादः | ” |
| गणपतिपूजनम् | ४ | नवग्रहस्थापनम | ” | होमः | ३० | देवताग्निविसर्ज्जनम् | ” |
| स्वस्तिपुण्याहवाचनम् | ६ | ग्रहाणामावाहनमन्त्रा. | १७ | नवग्रहाणांसमिध' | ” | ब्राह्मणभोजनम् | ४२ |
| कलशस्थापनम् | ” | अधिदेवतास्थापनम् | १८ | ग्रहादिहोममन्त्रा' | ३१ | **द्वितीयंप्रकरणम् २** | |
| पुण्याहवाचनप्रयोगः | ७ | प्रत्यधिदेवतास्थापनम् | ” | प्रधानदेवताहोमः | ३४ | विनायकशांतिप्रयोगः | ४३ |

श्रीगणेशायनमः ॥ अथ शान्तिप्रकाशप्रारंभः ॥ ॥ भवानीशंकरौ वंदे प्रतिमालिंगरूपिणौ॥पूजितौ जपहो
माद्यैः शान्तिपुष्टिविधायकौ ॥ १ ॥ प्रणम्य विश्वेश्वरमिष्टदेवं दृष्ट्वा वसिष्ठादिकृताश्च संहिताः ॥ लोको
पकाराय करोमि ग्रंथं[1] शान्तिप्रकाशं समनुं[2] सपद्धतिम्॥ २ ॥ सन्ति ग्रंथा यद्यपि ऋग्वेदिनां शांतिसाराद्याः ॥
नास्त्यस्माकं यजुषां तस्मात्कार्यः परिश्रमोऽस्माभिः ॥ ३ ॥ तत्र तावत्सर्वशांत्युपयोगिशुभदिनविचारः ॥
पुनर्वसुद्वये स्वातौ त्र्युत्तरे श्रवणत्रये ॥ रेवतीद्वितये हस्तेऽनुराधारोहिणीद्वये ॥ १ ॥ शान्तिकं पौष्टिकं कर्म
शुभवारे प्रकीर्तितम् ॥ अथ वह्निवासस्तत्फलं च ॥ सैका १ तिथिर्वारयुता कृता ४ प्ता शेषे गुणे ३ ऽभ्रे०
भुवि वह्निवासः । सौख्याय होमे शशि १ युग्म २ शेषे प्राणार्थनाशो दिवि भूतले च ॥ २ ॥ संस्कारेषु विचा
रोऽस्य न कार्यो नापि वैष्णवे ॥ नित्ये नैमित्तिके कार्ये न चाब्दे मुनिभिः स्मृतः ॥ ३ ॥ अथ होमे खेटाहु
तिफलम् ॥ सूर्यभात्त्रि ३ त्रि ३ भे चांद्रे सूर्यविच्छुक्रपंगवः॥चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ॥ ४ ॥
अग्नेः स्थापनवेलायां पूर्णाहुत्यामथापि वा ॥ आहुतिर्वह्निवासश्च विलोक्यौ शांतिकर्मणि ॥ ५ ॥ शांतिकर्मं

१ “ मेग्रेहे” इति पिङ्गलसूत्रेण सयोगपरत्वेपि मकारोत्तरवर्तीकारस्य लघुत्वम् । २ समन्त्रम् ।

प्रवक्ष्यामि नारदेन यथोदितम् ॥ गणेशं पूजयेदादौ स्वस्तिपुण्याहवाचनम् ॥ ६ ॥ मातृणां पूजनं कार्यं नांदीश्राद्धमतः परम् ॥ आचार्यं वरयित्वाथ ब्रह्माणं गाणपत्यकम् ॥ ७ ॥ सदस्यमृत्विजश्चैव जापकान्व रयेत्ततः ॥ दिग्रक्षणं ततः कार्यं पंचगव्यं यथाविधि ॥ ८ ॥ भूमिं सपूज्य विधिवत्तत्र संस्कारपंचकम् ॥ स्थंडि लेऽग्निं प्रतिष्ठाप्य कलशान्स्थापयेत्क्रमात् ॥ ९ ॥ मूर्त्यग्न्युत्तारणं प्राणप्रतिष्ठा स्थापनार्चनम् ॥ ग्रहादीन्स्था पयित्वाथ स्थापयेद्रुद्रकुंभकम् ॥ १० ॥ ब्रह्मासनं ततो दत्वा कारयेत्कुशकण्डिकाम् ॥ लिंगोक्तैर्नाममंत्रैर्वा यथाविधि यथाक्रमम् ॥ ११ ॥ देवताग्रहहोमं च यथासंख्यपुरःसरम् ॥ पूजास्विष्टं नवाहुतीर्बलिं पूर्णाहुतिं तथा ॥ १२ ॥ स्रवाश्वादिविमोकान्तं होमशेषं समापयेत् ॥ श्रेयः संपाद्य दानं च ह्यभिषेको विसर्जनम् ॥ ॥ १३ ॥ विप्राशिषः प्रगृह्णीयात्तान्मिष्टान्नेन भोजयेत् ॥ इति शान्तिप्रयोगानुक्रमः ॥ ॥ ॥ ॥

अथ सर्वशांतिकर्मोपयोगिनवग्रहमखप्रयोगः । तत्रादौ यथाचारं सुगंधितैलाभ्यंजनपूर्वकमुष्णोदकेन मङ्ग लस्नानं कृत्वा शुक्लधौतवस्त्रे परिधाय यथायोग्यालंकृतो धृतकुंकुमकेशरान्यतममङ्गलतिलकः करद्वये पवि त्रोपग्रहः स्वासने प्राङ्मुख उपविश्य दक्षिणपार्श्वे संभारान् स्थापयित्वा पत्न्या समारब्धः स्मार्त्तविधिना

द्विराचम्य प्राणानायम्य शान्तिपाठं पठित्वा लक्ष्मीनारायणादिदेवान्प्रणमेत् ॥ अथ शांतिपाठः ॥ ॐआनो
भद्राः क्रतवो यन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदः॥देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारो
दिवेदिवे ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतांदेवानांरातिरभिनोनिवर्तताम् ॥ देवानांसख्यमुप
सेदिमावयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षम
स्रिधम् ॥ अर्यमणंवरुणꣳसोमंमश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषज
न्तन्मातापृथिवीतत्पिताद्यौः॥तद्ग्रावाणःसोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशा
नञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये
॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्ति
नोबृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथेषुजग्मयः ॥ अग्निर्जिह्वामनवः
सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः॥

स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ८ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसं
न्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षम
दितिर्म्माता सपिता सपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ १० ॥ तम्पत्नी
भिरनुगच्छेमदेवाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्यलोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः
॥ ११ ॥ आयुष्यवर्च्चस्यᳬरायस्पोषमौद्भिदम् ॥ इदᳬहिरण्यंवर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ १२ ॥
द्यौः शान्तिरन्तरिक्षᳬशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः
शान्तिर्ब्रह्मशान्तिः सर्वᳬशान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १३ ॥ यतोयतः समीहसेततो
नोऽअभयङ्कुरु ॥ शन्नः कुरुप्रजाभ्योभयन्नः पशुभ्यः ॥ १४ ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ सर्वारि
ष्टशान्तिर्भवतु ॥ ॐ ॥ श्रीमन्महागणाधिपतये नमः ॥ ॐ लक्ष्मीनारायणाभ्यां नमः ॥ ॐ उमाम
हेश्वराभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरंदराभ्यां नमः । ॐ मातापितृचरणकमलेभ्यो

ॐकुलदेवताभ्यो नमः। ॐइष्टदेवताभ्यो नमः। ॐग्रामदेवताभ्यो नमः। ॐस्थानदेवताभ्यो नमः।
नमः। ॐवास्तुदेवताभ्यो नमः। ॐसर्वेभ्यो देवेभ्यो नमः। ॐसर्वेभ्यो ब्राह्मणेभ्यो नमः।ॐपुण्यं पुण्याहं दीर्घमा
मायुरस्तु ॥ ॐसुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥ १ ॥
धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ २ ॥ विद्यारंभे वि
वाहे च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिवर्णं चतु
र्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्व
विघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गौरि ना
रायणि नमोस्तु ते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनो
हरिः ॥ ७ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिंदीवरश्यामो हृदयस्थो जनार्दनः ॥ ८ ॥
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणम्यादौ शांतिकार्यार्थसिद्धये ॥ ९ ॥ सर्वेष्वारं
भकार्येषु त्रयस्त्रिभुवनेश्वराः॥देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥१०॥ वक्रतुंड महाकाय सूर्यकोटि

ममप्रभ॥अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥११॥इति प्रणम्य संकल्पं कुर्यात्॥अथ संकल्प ॥तत्रादौदक्षिण
हस्ते कुशत्रययवगंधपुष्पजलान्यादाय।ॐविष्णुर्विष्णुर्विष्णु ।तत्सद्ब्रह्म श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञ
याप्रवर्त्तमानस्यअद्यश्रीब्रह्मणोद्वितीयेपरार्द्धएकपञ्चाशत्तमेवर्षेप्रथममासेप्रथमपक्षेप्रथमदिवसेअह्नोद्वितीये
यामेतृतीयेमुहूर्त्तेरथन्तरादिद्वात्रिंशत्कल्पानांमध्ये अष्टमेश्वेतवाराहकल्पेस्वायंभुवादिमन्वन्तराणां मध्ये स
प्तमेवैवस्वतमन्वन्तरेकृतत्रेताद्वापरकलिसंज्ञानांचतुर्णांयुगानांमध्येवर्तमानेअष्टाविंशतितमेकलियुगेतत्प्रथम
चरणेतथा पञ्चाशत्कोटियोजनविस्तीर्णभूमण्डलान्तर्गतसप्तद्वीपमध्यवर्त्तिनिजंबूद्वीपे तत्रापि नवखण्डानांम
ध्येनवसहस्रयोजनविस्तीर्णभरतखण्डे तत्रापि परमपवित्रेभारतेवर्षे आर्यावर्त्तान्तर्गतब्रह्मावर्तैकदेशे अमुक
क्षेत्रेश्रीगंगायमुनयो पश्चिमेतटे नर्मदायाउत्तरेतटे देवब्राह्मणानांसन्निधौ श्रीमन्नृपविक्रमादित्यराज्यादमुक
सख्यापरिमितेप्रवर्तमानवत्सरे प्रभवादिषष्टिसंवत्सराणांमध्येऽमुकनाम्निसंवत्सरे अमुकायने अमुकर्त्तौअमु
कमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थेचन्द्रे अमु
कराशिस्थेसूर्य अमुकराशिस्थितेदेवगुरौ शेषेषुग्रहेषुयथायथाराशिस्थानस्थितेषुसत्सु एवंगुणविशेषणविशि

ष्ठायांशुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं आत्मनः श्रुतिस्मृतिपुराणोक्तफलावाप्तये अस्मिन्पुण्याहे मम कलत्रादिभिःसह जन्मराशेः सकाशान्नामराशेः सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्गोचराद्वा येकेचिच्चतुर्थाष्टम द्वादशाद्यनिष्टस्थानस्थिताः क्रूरग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थंसर्वदा तृतीयैका दशशुभस्थानास्थितवदुत्तमफलप्राप्त्यर्थं तथा दशान्तर्दशाचोपदशादिनदशाजनितपीडाऽल्पायुराधिदैवाधि भौतिकाध्यात्मिकजनितक्लेशनिवृत्तिपूर्वक शरीरारोग्यार्थं परमैश्वर्य्यादिप्राप्त्यर्थं च सग्रहमखाममुकशान्ति करिष्ये। इति॥ तदंगत्वेनगणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं नांदीश्राद्धमाचार्यादिवरणं च करिष्ये। इति संकल्प्य। कर्मार्थंजलपूरितकलशार्चनम्। ॐ तत्वांयामिब्रह्मणावन्दमानस्तदाशास्तेयज मानोहविर्भिः॥अहेडमानोवरुणेहबोध्यु रुशꣳ समानुऽआयुःप्रमोषीः॥अस्मिन्कलशेॐवरुण इहागच्छेहतिष्ठ इत्यावाह्य ॐवरुणायनमः। इतिगंधाक्षतपुष्पैःसंपूज्य। कलशस्यमुखेविष्णुरित्याद्यभिमंत्र्य। ॐगंगे च यमुने चैव गोदावरि सरस्वति॥ नर्मदे सिंधु कावेरि जलेस्मिन्सन्निधिं कुरु॥ १॥ अस्मिन्कलशे सर्वाणि ती र्थान्यावाहयामि पूजयामि नमस्करोमि। ततः दूर्वाभिः कलशोदकेन संभारान् ॐअपवित्रः पवित्रो वा सर्वा

रस्थांगतोपि वा ॥ य स्मरेतपुडरीकाक्षं सबाह्याभ्यन्तर शुचि ॥१॥ इति मन्त्रेण सप्रोक्ष्य।दीपपूजनंकुर्यात् ।
भोदीप त्वं ब्रह्मरूप अन्धकारनिवारक ॥ इमां मया कृतां पूजां गृह्णन्स्तेज प्रवर्धय ॥ १ ॥ दीपायनम ।
इति गंधाक्षतपुष्पैः पूजयेत् ॥ अथ गणपतिपूजनम् । तत्रादौ ध्यानम् । श्वेताङ्ग श्वेतवस्त्रं सितकुसुमगणै
पूजित श्वेतगंधे क्षीराब्धौ रत्नदीपे सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भि पाशाङ्कुशेष्टाभयधृतिविशद चन्द्र
मौलिं त्रिनेत्रं ध्यायेच्छांत्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ ॐभूर्भुव स्व सिद्धिबुद्धिस
हितमहागणपतये नम । ध्यायामि । इति ध्यानम् ॥ १ ॥ पुष्पाण्यादाय ॥ हेहेरब त्वमेह्येहि अंबिकात्र्यंब
कात्मज ॥ सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभपितु पित ॥१॥ नागास्य नागहार त्वं गणराज चतुर्भुज ॥ भूषित
स्वायुधैर्दिव्यै पाशांकुशपरश्वधै ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतो ॥ इहागत्य गृहाण त्वं
पूजां क्रतु च रक्ष मे ॥ ३ ॥ ॐ गणानान्त्वागणपतिर्ठ हवामहेप्रियाणान्त्वाप्रियपतिर्ठ हवामहेनिधीनान्त्वा
निधिपतिर्ठहवामहेवसोमम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ ॐ भूर्भुव स्व सिद्धिबुद्धिस
हितमहागणपतये नम । गणपतिमावाहयामि स्थापयामि इत्यावाह्य ॥२॥ ॐ रम्यं सशोभनं दिव्यं सर्वसौ

ख्यकरं शुभम् ॥ आसनं च मया दत्तं गृहाण गणनायक ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहित महागणपतये नमः । आसनं समर्पयामि । इत्यासनम् ॥ ३ ॥ ॐउष्णोदकं निर्मलं च सर्वसौगंध्यसंयुतम् ॥ पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ इति पाद्यम् ॥ ४ ॥ ॐ ताम्रपात्रे स्थितं तोयं गंधपुष्पफलान्वितम् ॥ सहिरण्यं ददाम्यर्घं गृहाण गणनायक ॥ इत्यर्घम् ॥ ५ ॥ ॐ सर्वतीर्थसमायुक्तं सुगंधि निर्मलं जलम् ॥ आचमार्थं मया दत्तं गृहाण परमेश्वर ॥ इत्याचमनम् ॥ ६ ॥ अथ पंचामृतस्नानम् । ॐकामधेनुसमुद्भूतं सर्वेषां जीवनंपरम् ॥ पावनंयज्ञहेतुश्च पयःस्नानार्थमर्पितम् ॥ इति पयःस्नानम् ॥ ७ ॥ ॐपयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥ इति दधिस्नानम् ॥ ८ ॥ ॐनवनीतसमुत्पन्नं सर्वसंतोषकारकम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ इति घृतस्नानम् ॥ ९ ॥ ॐतरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ इति मधुस्नानम् ॥ १० ॥ ॐइक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ इति शर्करास्नानम् ॥ ११ ॥ नाना सुगंधद्रव्यं च चंदनं रजनीयुतम् ॥ उद्वर्तनं मया दत्तं गृहाण गणनायक ॥ इत्युद्वर्तनस्नानम् ॥ १२ ॥ ॐका

वेरी नर्मदा वेणी तुंगभद्रा सरस्वती ॥ गंगा च यमुनाऽऽसां वा स्नानार्थं प्रतिगृह्यताम् ॥ इति शुद्धोदक
स्नानम् ॥ १३ ॥ ॐसर्वभूषादिके सौम्ये लोकलज्जानिवारणे ॥ मयोपपादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥
इति वस्त्रम् ॥ १४ ॥ ॐनवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ॥ उपवीतं मया दत्तं गृहाण परमेश्वर ॥
इति यज्ञोपवीतम् ॥ १५ ॥ ॐश्रीखण्डं चंदनं दिव्यं केशरादिसमन्वितम् ॥ विलेपनं सुरश्रेष्ठ चंदनं प्रति
गृह्यताम् ॥ इति गंधम् ॥ १६ ॥ ॐअक्षताश्च सुरश्रेष्ठ कुंकुमाक्ता सुशोभिता ॥ मया निवेदिता भक्त्या गृहा
ण परमेश्वर ॥ इत्यक्षतान् ॥ १७ ॥ ॐसुमाल्यानि सुगंधीनि मालत्यादीनि वै प्रभो ॥ मयाहृतानि पूजार्थं
पुष्पाणि प्रतिगृह्यताम् ॥ इति पुष्पाणि ॥ १८ ॥ ॐदूर्वाकुरान्सुहरितानमृतान्मङ्गलप्रदान् ॥ आनीतांस्तव
पूजार्थं गृहाण गणनायक ॥ इति दूर्वां ॥ १९ ॥ ॐवनस्पतिरसोद्भूतो गंधाढ्यो गंध उत्तमः ॥ आघ्रेय सर्व
देवानां धूपोयं प्रतिगृह्यताम् ॥ इति धूपम् ॥ २० ॥ ॐसाज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं
गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥ इति दीपम् ॥ २१ ॥ ॐशर्कराघृतसंयुक्तं मधुरं स्वादु चोत्तमम् ॥ उप
हारसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ इति नैवेद्यम् ॥ २२ ॥ ॐशीतलं निर्मलं तोयं कर्पूरेण समन्वितम् ॥ आच

मार्थ मया दत्तं गृह्यतां गणनायक ॥ इत्याचमनम् ॥ २३ ॥ ॐइदं फलं मया देव स्थापितं पुरतस्तव ॥
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ इति फलानि ॥ २४ ॥ ॐपूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥
एलादिचूर्णसंयुक्तं तांबूलं प्रतिगृह्यताम् ॥ इति तांबूलम् ॥ २५ ॥ ॐ हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ॥
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ इति दक्षिणाम् ॥ २६ ॥ ॐकदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् ॥
आरार्तिकमहं कुर्वे पश्य मे वरदो भव ॥ इत्यारार्तिकम् ॥ २७ ॥ ॐनानासुगंधपुष्पाणि यथाकालोद्भवानि
च ॥ पुष्पांजलिर्मयादत्तं गृहाण गणनायक ॥ इति पुष्पांजलिः ॥ २८ ॥ ॐयानि कानि च पापानि ज्ञाता
ज्ञातकृतानि च ॥ तानि सर्वाणि नश्यंति प्रदक्षिणपदे पदे ॥ इति प्रदक्षिणा ॥ २९ ॥ अथ विशेषार्घः ॥
ॐरक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुर
कृपासिंधो षाण्मातुराग्रज प्रभो ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफलार्घ्येण फल
दोऽस्तु सदा मम ॥ २ ॥ अथ प्रार्थना ॥ ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय ॥
नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ १ ॥ भक्तार्तिनाशनपराय गणेश्वराय

सर्वेश्वराय शुभदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ २ ॥
अनया पूजया सिद्धिबुद्धिसहितमहागणपति सांग सपरिवार प्रीयताम् ॥ इति गणपतिपूजनम् ॥ अथ
स्वस्तिपुण्याहवाचनम् । तत्रादौ कलशस्थापनम् ॥ ॥ महीद्यौरिति भूमिं स्पृष्ट्वा । ॐमहीद्यौः पृथिवीच
नऽइमंयज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधय समिति यवान्क्षिप्त्वा । ॐओषधयः
समवदन्तसोमेनसहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ २ ॥ आजिघ्रकलशमितिकल
शंस्थापयेत् ॥ ॐआजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधा
रापयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ वरुणस्योत्तंभनमितिजलंपूरयेत् ॥ ॐवरुणस्योत्तम्भनमसिवरु
णस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऋतसदन्यसि॥वरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥ ४ ॥
त्वांगंधर्वाइतिगंधप्रक्षिपेत्।ॐत्वागन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वांबृहस्पतिः त्वामोषधेसोमोराजाविद्वान्यक्ष्मा
दमुच्यत॥५॥याओषधीरितिसर्वौषधी ॥ ॐयाऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणां महꣳ

शतन्धामानिसुसर्चह॥काण्डात्काण्डादितिदूर्वाः॥ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि॥ एवानोदूर्वे
प्रतनुसहस्रेणशतेनच ॥ ७ ॥ अश्वत्थेवेतिपंचपल्लवान् ॥ ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गो
भायइत्किलासथयत्सनवंथपूरुषम् ॥ ८ ॥ स्योनापृथिवीतिसप्तमृदः ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवे
शनी॥यच्छानःशर्म्मसप्रथाः॥९॥याःफलिनीरितिफलम्॥याः फलिनीर्याऽअं फलाऽअंपुष्पायाश्चपुष्पिणीः ॥
बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वंहसः ॥ १० ॥ परिवाजपतिरितिपंचरत्नानि ॥ परिवाजपतिः कविरग्निर्ह
व्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेतिहिरण्यम् ॥ ॐ हिरण्यगर्भःसमवर्तताग्रे
भूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १२ ॥ युवासुवा
साइतिरक्तसूत्रेणवेष्टयेत् ॥ ॐ युवासुवासाःपरिवीतऽआगात्सऽउश्रेयान्भवति जायमानः ॥ तंधीरासःकव
यऽउन्नयन्तिसाध्योमनसादेवयन्तः॥ १३ ॥ पूर्णादर्वीति पूर्णपात्रमुपरिन्यसेत् ॥ ॐ पूर्णादर्विपरापतसुपू
र्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्ज्जंशतक्रतो ॥ १४ ॥ तत्वायामीतिवरुणमावाह्य । ॐ तत्वा

यामित्रह्मणावन्दमानुस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंठ सुमानऽआयुः प्रमोषीः
॥ १५ ॥ ॐ वरुणंसांगसपरिवार आवाहयामि । ॐ भूर्भुव स्व अपांपतिवरुणायनम । इति नाममंत्रेण
षोडशोपचारै संपूजयेत् ॥ ततोगंगाद्यावाहनम् ॥ सर्वे समुद्रा सरितस्तीर्थानि जलदा नदा ॥ आयांतु यज
मानस्य दुरितक्षयकारका ॥ १ ॥ तत । कलशस्य मुखे विष्णुरित्यादिनाकलशाभिमंत्रणं कृत्वा ॥ ॐ देव
दानवसंवादे इत्यादिप्रार्थ्य । ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक ॥ पुण्याहवाचन यावत्तावत्त्वं
सन्निधौ भव १ इति वरुणं प्रणमेत् । इति कलशस्थापनम् ॥ अथ पुण्याहवाचनप्रयोग ॥ अवनीकृतजानु
मण्डल कमलमुकुलसदृशमंजलिं शिरस्याधाय अनंतरं दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा दीर्घा
नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । ॐ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्म्माणिधार
यंन् १ तेनायु प्रमाणेनपुण्यं पुण्याहंदीर्घमायुरस्त्विति भवन्तोब्रुवंतु । इतियजमान ॥ पुण्यंपुण्याहं दीर्घ
मायुरस्त्वितिद्विजा ॥ एवंसर्वत्रयजमानवचनोत्तरंब्राह्मणा प्रतिवचनंदद्युः ॥ ब्राह्मणानांहस्तेषुप्रोक्षित
मस्तु । ॐ शिवा आप सन्तु । संतुशिवाआपः । ॐ सौमनस्यमस्तु । अस्तुसौमनस्यम् ॥ ॐ अक्षतंचारिष्टं

चास्तु। अस्त्वक्षतमरिष्टंच। गंधाःपांतु सौमंगल्यंचास्त्विति भवंतोब्रुवंतु। गंधाःपांतु। सौमंगल्यंचास्तु। एवंस त्र। अक्षताः पांतु आयुष्यमस्त्विति भवंतो ब्रुवंतु। अक्ष०। पुष्पाणिपांतु सौश्रियमस्तु। तांबूलानिपांतु ऐश्वर्यमस्तु। दक्षिणाःपांतु बहुधनमस्तु। ततोयजमान आचार्यादीन् प्रणम्य श्रीर्यशोविद्याविनयोवित्तं बहु पुत्रं चायुष्यंचास्त्विति भवंतोब्रुवंतु। इति वदेत् ॥ तेचश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ इत्युक्त्वादीर्घमायुः शांतिः पुष्टिस्तुष्टिश्चास्त्वितियजमानमुदभ्यभिषिंचेयुः ॥ यंकृत्वासर्ववेदयज्ञक्रियाकारण कर्मारंभाः शुभाः शोभना प्रवर्त्तंते। तमहमोंकारादिंकृत्वाबहुऋषिमतंसमनुज्ञातं भवद्भिरनुज्ञातः पुण्यंपुण्याहं वाचयिष्ये ॥ ॐवाच्यताम् ॥ अथाशीर्वादः ॥ ॐ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ᳪ संस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥१॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवाना ᳪ राति रभिनोनिवर्त्तताम् ॥ देवाना ᳪ सख्यमुपसेदिमावयन्देवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥ नतद्रक्षा ᳪ सिन पिशाचास्तरन्तिदेवानामोजः प्रथमज ᳪ ह्येतत् ॥ योबिभर्तिदाक्षायण ᳪ हिरण्य ᳪ सदेवेषुकृणुतेदीर्घमायुःसम

नुष्येपुकृणुतेदीर्घमायुः॥ ३ ॥ दीर्घायुस्तऽओषधेखनितायस्मैचत्वाखनाम्यहम् ॥ अथोत्वन्दीर्घायुर्भूत्वाशु
तवल्शाविरोहतात् ॥ ४ ॥ द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाः सनरस्यप्रियंसत् ॥ द्रविणोदावीरवतीशंनो
द्रविणोदारासतेदीर्घमायुः॥ ५ ॥ सविता पश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सविता नं
सुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः॥ ६ ॥ नवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रम् ॥ भागन्दे
वेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायु ॥७॥ उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽअश्वदा सहतेसूर्येणहिरण्य
दाऽअमृतत्वंभजन्तेवासोदाःसोमप्रति रन्तआयु ॥८॥ इत्याशीर्वाद ॥ ॥ व्रतजपनियमतपःस्वाध्यायक्रतुदयाद
मदानविशिष्टानांसर्वेषांब्राह्मणानां मन समाधीयताम् ॥ इति यजमान ।समाहितमनसःस्म ।इतिद्विजाः ॥ प्रसी
दन्तुभवन्त ॥ यजमानो वदेत् ॥ प्रसन्नाः स्म ।इतिद्विजा ब्रूयु ॥ ततो यजमानो ब्रूयात् ॥ ॐ शांतिरस्तु ।अस्त्विति द्वि
जा प्रतिवचनं सर्वत्र दद्युः॥ ॐ पुष्टिरस्तु ॥ ॐ तुष्टिरस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु ॥ ॐ आयुष्यम
स्तु ॥ ॐ आरोग्यमस्तु ॥ ॐ शिवंकर्मास्तु ॥ ॐ कर्मसमृद्धिरस्तु ॥ ॐ वेदसमृद्धिरस्तु ॥ ॐ शास्त्रसमृ

द्धिरस्तु ॥ ॐ धनधान्यसमृद्धिरस्तु ॥ ॐ पुत्रपौत्रसमृद्धिरस्तु ॥ ॐ इष्टसंपदस्तु ॥ ॐ अरिष्टनिरसनम
स्तु ॥ १५ ॥ ॐ यत्पापं रोगं अकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ॐ यच्छ्रेयस्तदस्तु ॥ ॐ उत्तरे कर्मणि नि
र्विघ्नमस्तु ॥ ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् ॥
ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ ६ ॥ उदकसेकः ॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेव
ताः प्रीयंताम् ॥ ॐ तिथिकरणेसमुहूर्तेसनक्षत्रेसग्रहे साधिदेवते प्रीयेताम् ॥ ॐ दुर्गापांचाल्यौप्रीयेताम् ॥
ॐ अग्निपुरोगाविश्वेदेवाः प्रीयंताम् ॥ ॐ इंद्रपुरोगामरुद्गणाः प्रीयंताम् ॥ ॐ माहेश्वरीपुरोगाउमामातरः
प्रीयंताम् ॥ ॐ अरुंधतीपुरोगाएकपत्न्यःप्रीयंताम् ॥ ॐ विष्णुपुरोगाः सर्वेदेवाःप्रीयंताम् ॥ ॐ ब्रह्मपुरोगाः
सर्वेवेदाः प्रीयंताम् ॥ ॐ ब्रह्म च ब्राह्मणाश्च प्रीयंताम् ॥ ॐ श्रीसरस्वत्यौ प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥
ॐ भगवतीकात्यायनी प्रीयताम् ॥ ॐ भगवतीमाहेश्वरी प्रीयताम् ॥ ॐ भगवतीऋद्धिकरी प्रीयताम् ॥
ॐ भगवतीसिद्धिकरी प्रीयताम् ॥ ॐ भगवतीपुष्टिकरी प्रीयताम् ॥ ॐ भगवतीतुष्टिकरी प्रीयताम् ॥ ॐ
ॐ भगवन्तौविघ्नविनायकौ प्रीयेताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयंताम् ॥ ॐ सर्वाग्रामदेवताः प्रीयंताम् ॥

॥ २१ ॥ ॐ हताश्वब्रह्मद्विष ॥ ॐ हताश्वपरिपथिन ॥ ॐ हताश्वविघ्नकर्तार शत्रव पराभवयांतु ॥
ॐ शाम्यतुघोराणि ॥ ॐ शाम्यंतुपापानि ॥ ॐ शाम्यंत्वीतय ॥ ६ ॥ ॐ शुभानिवर्द्धताम् ॥ ॐ शिवाआ
प सतु ॥ ॐ शिवाऋतव संतु ॥ ॐ शिवाओषधय संतु ॥ ॐ शिवानद्य सतु ॥ ॐ शिवागिरय संत ॥
ॐ शिवाअतिथय सतु ॥ ॐ शिवाअग्नय संत ॥ ॐ शिवाआहुतय संत ॥ ॐ अहोरात्रेशिवे स्याताम् ॥
ॐ निकामेनिकामेनः पर्जन्योंवर्षतुफलवत्योनऽओषधयः पच्च्यन्तांयोगक्षेमोनंःकल्पताम् ॥ १ ॥ ॐ शु
क्रांगारकबुधबृहस्पतिशनेश्चरराहुकेतुसोमसहिताआदित्यपुरोगा सर्वेग्रहा प्रीयंताम् ॥ ॐ भगवान्नारायण
प्रीयताम् ॥ ॐ भगवान्पर्जन्य प्रीयताम् ॥ ॐ भगवान्स्वामीमहासेन प्रीयताम् ॥ ॐ पुण्याहकालान्वाच
यिष्ये । इतियजमान ॥ ॐ वाच्यताम् । इति प्रतिवचनम् ॥ ब्राह्म्यंपुण्यमहर्यच्चसृष्टयुत्पादनकारकम् ॥
वेदवृक्षोद्भवंनित्यंतत्पुण्याहंब्रुवंतुन ॥ १ ॥ भोब्राह्मणा मह्यसकुटुंबायमहाजनान्नमस्कुर्वाणाय आशीर्वचन
मपेक्षमाणायक्रियमाणस्यसग्रहमखामुकशांतिकर्मण पुण्याहंभवंतोब्रुवंतु ॥ ॐ पुण्याहंत्रिर्विप्राब्रूयु ॥ ॐ
पुनंतुमादेवजनाःपुनंतुमनसाधियः पुनंतुविश्वाभुतानिजातवेदः पुनीहिमा ॥ १ ॥ पृथिव्यामुद्धृतायांतुयत्क

ल्याणंपुराकृतम् ॥ ऋषिभिःसिद्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः १ भोब्राह्मणाः मह्यं० अमुककर्मणः । कल्याणं भवंतोब्रुवंतु । ॐ कल्याणम् ३ ॥ ॐ यथेमांवाचंकल्याणीमावदानिजनेभ्यः ब्रह्मराजन्याभ्यांशूद्राय चार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयम्मेकामः समृध्यतामुपमादोनमतु ॥१॥ सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ संपूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवंतु नः ॥१॥ भोब्राह्मणाः मह्यं० कर्मणः ऋद्धिंभवंतोब्रुवंतु । ॐ ऋध्यताम् ३ ॥ ॐ सत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम ॥ दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्स्वर्ज्योतिः ॥ स्वस्तिस्तुयाविनाशाख्यापुण्यकल्याणवृद्धिदा ॥ विनायकप्रियानित्यंतांचस्वस्तिंब्रुवंतुनः॥१॥भोब्राह्मणाः० कर्मणःस्वस्तिंभवंतोब्रुवन्तु॥ ॐ स्वस्ति ३॥ ॐस्वस्तिनऽइंद्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥१॥ समुद्रमथनाज्जाताजगदानंदकारिका ॥ हरिप्रियाचमांगल्यातांश्रियंचब्रुवंतुनः ॥१॥ भोब्राह्मणाः मयाकृतस्यकर्मणः श्रीरस्त्वितिभवंतोब्रुवंतु ॥ ॐ अस्तुश्रीः ३ ॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपा

भ्यैंनक्षत्राणिरूपमश्विनोव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाणसर्वलोकुम्मंऽइषाण ॥ १ ॥ अस्मिन् पुण्या
हवाचनेन्यूनातिरिक्तोयोविधि सउपविष्टब्राह्मणानांवचनात् श्रीमहागणपतिप्रसादाच्च सर्व परिपूर्णोऽस्तु॥
ॐ अस्तुपरिपूर्ण ॥ ॥अथाऽभिषेक ॥ ॥अभिषेकेपत्नीवामत एकस्मिन्कलशे वरुणोदक गृहीत्वाऽविधुरा
श्चत्वारो ब्राह्मणादूर्वाम्रपल्लवैर्यजमानमभिषिंचेयु ॥ तत्रमंत्रा ॥ॐपय॰पृथिव्याम्पयऽओषधीषुपयोदिव्यन्त
रिक्षेपयोधाः॥ पयस्वतीःप्रदिशः सन्तुमह्यम् ॥ १ ॥ ॐ पञ्चनद्य ० ॥ २ ॥ वरुणस्योत्तम्भनमसिवरुणस्य
स्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसि वरुणस्यऽऋतसदनमासीद ॥ ३ ॥ पुनन्तु ३
मादेवजनाःपुनन्तुमनसाधियः॥पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ४ ॥ देवस्यत्वासवितुः प्रसवेश्वि
नोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ५
देवस्यत्वा०। सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिंचामि॥६॥देवस्यत्वा०॥ अश्विनोर्भैषज्येन तेज
से ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येनवीर्यायान्नाद्यायाभिषिंचामीन्द्रस्येन्द्रियेण बलायश्रियैयशसे

भिषिञ्चामि॥७॥विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्नऽआसुव॥८॥धामच्छदग्निरिन्द्रोब्रह्मादेवोबृह

स्पतिः॥ सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनः शुभे॥१०॥त्वँय्यविष्ठदाशुषोनॄँः पाहिशृणुधीगिरः ॥ रक्षातोकमु

त्त्मना ॥११॥ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः॥प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहि द्विपदेचतुष्पदे ॥१२॥

पालाशंभवति तेनब्राह्मणोभिषिंचतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिंचति ॥१३॥ सर्वेषांवाऽएषवेदानाꣳरसो

यत्सामसर्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिंचति ॥१४॥ ॐ द्यौः शान्तिरन्तरिक्षꣳ शांतिः पृथिवीशांतिरा

पःशान्तिरोषधयःशांतिः॥वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशांतिःसर्वꣳशांतिःशांतिरेवशांतिःसामाशां

तिरेधि॥१५॥यतोयतःसमीहसेततोनोऽअभयङ्कुरुशन्नःकुरुप्रजाभ्योभयन्नःपशुभ्यः ॥१६॥ अमृताऽभिषेकोऽ

स्तुशान्तिः शान्तिः शान्तिः । सुशांतिर्भवतु ॥ततः पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनंकार्यम् । तत्रमंत्रः । ॐ

अनाधृष्टापुरस्तादग्नेराधिपत्यऽआयुर्म्मेदाः पुत्रवतीदक्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मेदाः सुखदापश्चाद्देव

वस्य सवितुराधिपत्येचक्षुर्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्येरायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्पते

राधिपत्येऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यंस्स्याहिमनोरश्वासि ॥ १ ॥ अनेनपुण्याहवाचनेनश्रीप्रजापतिः
प्रीयताम् । इतिपुण्याहवाचनम् ॥ अथमातृकापूजनम् ॥ तत्रतावत् षड्विनायकपूजनम् ॥ गोधूमादिधान्यपु
ञ्जेपुहरिद्रारंजितेपुषड्विनायका स्थाप्या । तद्यथा मोदश्चैव प्रमोदश्च सुमुखोदुर्मुखस्तथा॥अविघ्नोविघ्नकर्ता च
षडेते विघ्ननायका ॥१॥ ॐमोदायनम मोदमावाहयामि १ ॐ प्रमोदाय॰प्रमोद॰२ ॐसुमुखाय॰सुमुख॰३
ॐदुर्मुखाय॰दुर्मुखं॰४ॐअविघ्नाय॰अविघ्नं॰५ॐविघ्नकर्त्रेनम विघ्नकर्तारमावाहयामि ॥ ५ ॥ इत्यावाह्य॥
ॐमनोजूतिरितिप्रतिष्ठाप्य ॐमोदादिषड्विनायकेभ्यो नम इति नाममंत्रेण षोडशोपचारे संपूजयेत् ॥ अन
या पूजयामोदादिषड्विनायका प्रीयताम् ॥ ततोगौर्यादिमातृका अक्षतपुंजेषु पूगीफलेषु वा निवेश्या ॥तत्रा
यक्रम ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातर ॥१॥ हृष्टि पुष्टि
स्तथातुष्टिरात्मन कुलदेवता । गणेशेनाधिकाह्येतावृद्धौपूज्याश्चषोडश ॥ २ ॥ ॐ गणेशायनम गणेशमावा
हयामि १ ॐ गौर्य्यैनम गौरीमावाहयामि२ ॐ पद्मायैनम पद्मामावाहयामि३ ॐशच्यैनम शचीमावाह
यामि४ॐमेधायैनम मेधां॰५ॐसावित्र्यैनम सावित्रीं॰६ॐविजयायै॰विजयां॰७ ॐजयायै॰जयां॰८ॐ

देवसेनायै०देवसेनां०९ॐस्वधायै०स्वधां०१०ॐस्वाहायै०स्वाहां०११ॐमातृभ्योनमः मातृरावा०१२ॐलो
कमातृभ्यो०लोकमातृः०१३हृष्ट्यै०हृष्टिं०१४ॐपुष्ट्यैनमः पुष्टिं०१५ॐतुष्ट्यैनमः तुष्टिमावाह०१६ॐकुलदे
वतायैनमः कुलदेवतामावाहयामि०१७इत्यावाह्य ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं
यज्ञꣳसमिमंदधातु। विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ। इतिप्र० ॐगौर्य्यादिषोडशमातृकाभ्योनमः इतिना
ममंत्रेण षोडशोपचारैः संपूजयेत्ततः कुड्येआवाहितमातृणामुपरि घृतेनकुंकुमाक्तेनदक्षिणोत्तराः सप्तपंचतिस्रो
वाधारादद्यात्। ॐवसोः पवित्रमसिशतधारंवसोः पवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोः पवि
त्रेणशतधारेणसुप्वाकामधुक्षः॥१॥ अथमातृकानामानि॥ श्रीर्लक्ष्मीर्धृतिर्मेधापुष्टिः श्रद्धासरस्वती॥ मांगल्येषुप्रपू
ज्यंते सप्तैताघृतमातरः१ ॐश्रियैनमः श्रियमावाहयामि १ ॐलक्ष्म्यैनमः लक्ष्मीं०२ ॐधृत्यै०धृतिं०३ ॐमेधा
यै०मेधां०४ ॐपुष्ट्यैनमः पुष्टिं०५ ॐश्रद्धायै०श्रद्धां०६ ॐ सरस्वत्यैनमः सरस्वतीमावाहयामि७इत्यावाह्य।
ॐघृतमातृकाभ्यो नमः। इति षोडशोपचारैः पूजयेत्। अथ स्थलमातरः॥ तत्रैवतंडुलपुंजेषु। ब्राह्मीमाहेश्वरीचैवकौ

मारीवैष्णवीतथा॥वाराहीचतथेंद्राणीचामुंडासप्तमातर ॥१॥ॐब्राह्मयै नम ब्राह्मीं०१ॐमाहेश्वर्यै०माहेश्वरीं०२
ॐकौमार्यै०कौमारीं०३ॐवैष्णव्यै०वैष्णवीं०४॥ॐवाराह्यै०वाराहीं०५ॐइंद्राण्यै० इंद्राणीं०६ॐ चामुंडायै
नम चामुंडामावाहयामि ७ इत्यावाह्य ॐ ब्राह्मयादिसप्तमातृकाभ्योनमः । इति नाममंत्रेण षोडशोपचारै
पूजयेत् ॥ अथायुष्यमंत्रजप ॥ ॐ आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यम्वर्चस्वज्जैत्राया
विशतादुमाम् १ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजꣳह्येतत् ॥ योबिभर्तिदाक्षायणꣳहिर
ण्यꣳसदेवेषुकृणुतेदीर्घमायुस्समनुष्येषुकृणुतेदीर्घमायु- ॥२॥ यदाबध्नंदाक्षायणाहिरण्यꣳशतानीकायसुमन
स्यमाना ॥ तन्मआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम्॥३॥इति मातृकापूजनम् ॥ ॥अथ सांक
ल्पिकनांदीश्राद्धप्रयोग ॥ तत्रादौ आचम्य प्राणानायम्यदेशकालौ संकीर्त्य । अद्यामुकशांतिकर्मांगत्वेन
सांकल्पिकविधिनाब्राह्मणयुग्मभोजनपर्याप्तान्ननिष्क्रयीभूतयथाशक्तिहिरण्येननांदीश्राद्धंकरिष्ये ॥ इतिसं
कल्प ॥ तत पाद्यादिदानम् ॥ सत्यवसुसज्ञका विश्वेदेवाः नांदीमुखाः ॐ भूर्भुव स्व इदंव पाद्यंपादावने

जनंपादप्रक्षालनंवृद्धिः । अमुकगोत्रा अस्मन्मातृपितामहीप्रपितामह्यः नांदीमुख्यः ॐ भूर्भुवः स्वः इदंवः पाद्यंपादप्रक्षालनंवृद्धिः । अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः नांदीमुखाः ॐ भूर्भुवःस्वः इदंवः पाद्यंपादप्रक्षालनंवृद्धिः । द्वितीयगोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः नांदीमुखाः ॐ भूर्भुवःस्वः इदंवः पाद्यंपादप्रक्षालनंवृद्धिः ॥ अथासनदानम् ॥ सत्यवसुसंज्ञकानांविश्वेषांदेवानांनांदीमुखानां ॐ भूर्भुवःस्वः इदमासनंसुखासनंस्वाहानमः नांदीश्राद्धेक्षणौक्रियेताम् । ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवावः ॥ अमुकगोत्राणामस्मन्मातृपितामहीप्रपितामहीनांनांदीमुखीनां ॐ भूर्भुवःस्वःइदमासनं सुखासनं स्वाहानमः नांदीश्राद्धेक्षणौक्रीयेताम्।ॐतथाप्राप्नुतांभवंतौप्राप्नुवावः॥अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानांनांदीमुखानां ॐ भूर्भुवःस्वः इदमासनं सुखासनं स्वाहानमः । नांदीश्राद्धे०॥द्वितीयगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नांदीमुखानां ॐ भूर्भुवःस्वः इदमासनंसुखासनंस्वाहा ॥ ततोगंधादिदानम् ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्योनांदीमुखेभ्यः इदंगंधाद्यर्चनं स्वाहासंपद्यतांवृद्धिः ॥ अमुकगोत्राभ्योऽस्मन्मातृपितामहीप्रपितामहीभ्योनांदीमुखीभ्यः इदंगंधाद्यर्चनंस्वाहासंपद्यतांवृद्धिः । अमु

कगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्योनांदीमुखेभ्य इदंगंधा० । द्वितीयगोत्रेभ्योऽस्मन्मातामह प्रमातामहवृद्धप्रमातामहेभ्य सपत्नीकेभ्यो नांदीमुखेभ्य इदंगधाद्यर्चनंस्वाहा संपद्यतांवृद्धि । ततोभोजन निष्क्रयद्रव्यदानम् । सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नत न्निष्क्रयीभूतकिंचिद्धिरण्यदत्तममृतरूपेण स्वाहासपद्यतावृद्धि । अमुकगोत्राभ्योऽस्मन्मातृपितामही प्रपितामहीभ्यो नांदीमुखीभ्यो ब्राह्मणयुग्म० ॥ अमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यो नांदीमु खेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नंतन्निष्क्रयी० ॥ द्वितीयगोत्रेभ्योऽस्मन्मातामहप्रमातामहवृद्धप्रमाताम हेभ्य सपत्नीकेभ्यो नांदीमुखेभ्यो ब्राह्मणयुग्म०॥ तत सक्षीरमुदकदानम्। सत्यवसुसंज्ञका विश्वेदेवा नांदी मुखा प्रीयंताम्। अमुकगोत्रा मातृपितामहीप्रपितामह्य प्रीयंताम् ॥ पितृपितामहप्रपितामहा प्रीयंताम्। द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहा सपत्नीका प्रीयंताम् ॥ ॥ अथाशिषोग्रहणम् ॥ गोत्रं नो वर्द्धताम्। वर्द्धतां वो गोत्रम् ॥ दातारो नोऽभिवर्धताम्। अभिवर्धतां वो दातार ॥वेदाश्च नोभिवर्धताम्। वर्धतां वो वेदा ॥ संततिर्नो वर्द्धताम्। वर्धतां व संतति ॥ श्रद्धा च नो माव्यगमत्। माव्यगमद्वः श्रद्धा ॥

वहुदेयं च नोऽस्तु अस्तु वो बहुदेयम् ॥ अन्नं च नो बहु भवेत् । भवतु वो बह्वन्नम् ॥ अतिथींश्च लभामहे । लभंतां वोऽतिथयः ॥ याचितारश्च नः संतु । संतु वो याचितारः ॥ एता आशिषः सत्याः संतु । संत्वेताः सत्याशिषः ॥ ततो दक्षिणादानम् ॥ सत्यवसुसंज्ञकेभ्योविश्वेभ्योदेवेभ्योनांदीमुखेभ्यः कृतस्य नांदीश्राद्ध स्यफलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतांदक्षिणांदातुमहमुत्सृजे ॥ ( यवमूलं आर्द्रकम् ) ॥ अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नांदीमुखीभ्यः कृतस्य० ॥ अमुकगोत्रेभ्यः पितृपितामह प्रपितामहेभ्यो नांदीमुखेभ्यः कृतस्य० । द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नी केभ्यो नांदीमुखेभ्यः कृतस्य० । ततो नांदीश्राद्धं संपन्नं सुसंपन्नमिति पठित्वा ॥ ॐ वाजेवा जे० १ । आमावाजस्य० २ । इति मंत्रद्वयेन विसर्जयेत् ॥ अस्मिन्नांदीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानांवचनात् नांदीमुखप्रसादात्सर्वःपरिपूर्णोऽस्तु । अस्तुपरिपूर्णः ॥ इति नांदीश्राद्धम् ॥

॥ अथ यथाविभवंवस्त्रालंकारादिभिराचार्यादिवरणम् ॥ तत्रादौ आचार्यम् । ॐ अमुकगोत्रोऽमुकशर्माऽहं अमुकगोत्रोत्पन्नं अमुकशर्माणं शुक्लयजुर्वेदांतर्गतमाध्यंदिनीयशाखाध्यायिनं ब्राह्मणमेभिर्गंधाक्षततांबूल

मुद्रिकावासोभि अस्मिन्सग्रहमखेअमुकशांत्याख्याकर्मणि आचार्यत्वेन त्वामहंवृणे इतिवृत्वा वृतोस्मी तिप्रतिवचनानन्तरं गंधादिभि सपूज्य। आचार्यस्तुयथास्वर्गे शक्रादीनांवृहस्पति ॥ तथात्वममयज्ञेस्मि न्नाचार्योभवसुव्रत ॥ १ ॥ इति प्रार्थयेत् ॥ ततोब्रह्मवरणम् । ॐ अमुकगोत्रोऽमुकशर्माऽहं अमुकगोत्रोत्पन्नं अमुकशर्माणं ब्राह्मणमेभिर्गंधाक्षततांबूलमुद्रिकावासोभि अस्मिन्सग्रहमखेअमुकशांत्याख्येकर्मणि ब्रह्मत्वे नत्वामहंवृणे इतिवृत्वा। वृतोस्मीति॰ गंधादिभि संपूज्य । यथाचतुर्मुखोब्रह्मासर्वलोकपितामह ॥ तथात्व ममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥ १ ॥ इतिप्रार्थयेत् ॥ तत ऋत्विजोऽष्टौचतुरोवावृणुयात्। अमुकगोत्रोत्प न्नानमुकशर्मण एभिर्गंधाक्षततांबूलमुद्रिकावासोभिर्ऋत्विक्त्वेनवोवृणे । इति वृत्वा । वृता स्म इतितैरुक्ते गंधादिभि संपूज्य ऋत्विजश्चयथापूर्वशक्रादीनांमखेऽभवन् ॥ यूयंतथामेभवंतुचर्त्विजोऽहंयसत्तमा ॥ १ ॥ इतिप्रार्थयेत् ॥ तत सूक्तजपार्थेविप्रान्वृत्वा गंधादिभि सपूज्य । यजमानर्त्विज परस्परंयज्ञकंकणंब ध्नीयु ॥ ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाऽऽप्नोतिदक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते॥१॥ तत प्रार्थना। अस्ययागस्यनिष्पत्तौभवंतोऽभ्यर्थितामया ॥ सुप्रसन्नै प्रकर्त्तव्यंशांतिकंविधिपूर्वकम् ॥ १ ॥

इत्याचार्यादिवरणम् ॥ अथदिग्रक्षणम् ॥ आचार्यो वामहस्तेगौरसर्षपान्[illegible]
क्षणंकुर्यात् । तत्रमंत्राः । ॐ रक्षोहणंम्बलगहनंम्वैष्णवीमिदमहन्तम्बंलगमुत्किरामियम्मेनिष्ट्योयममात्यो
निचखानेदमहन्तम्बंलगमुत्किरामियम्मेंसमानोयमसंमानोनिचखानेदमहन्तंबंलगमुत्किरामियम्मेसबंधु
र्य्यमसबन्धुर्निचखानेदमहन्तम्बंलगमुत्किरामियम्मेंसजातोयमसंजातोनिचखानोत्कृत्याङ्किरामि ॥१॥रक्षो
हणोंवोबलगहनःप्रोक्षांमिवैष्णवान्रक्षोहणोंवोबलगहनोवंनयामि वैष्णवान्रक्षोहणोंवोबलगहनोवस्तृणामिवै
ष्णवान्रक्षोहणौवाँबलगहनाऽउपंदधामि वैष्णवीरक्षोहणौवाँबलगहनौपर्य्यूहामिवैष्णवी वैष्णवमसिवैष्णवा
स्थ ॥२॥ रक्षसाम्भागोसिनिरस्तर्ठरक्षऽइदमहर्ठ रक्षोभितिष्ठामीदमहर्ठ रक्षोवंबाधऽइदमहर्ठ रक्षोधमन्त
मोंनयामि ॥ घृतेनद्यावापृथिवीप्रोर्णुवाथाँ वायोवेस्तोकानांमग्निराज्यंस्यवेत्तुस्वाहास्वाहाकृतेऽऊर्ध्वनभसं
मारुतङ्गच्छतम् ॥ ३ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥ द्रोणेसधस्थमासदत् ॥ ४ ॥ अपसर्पंतुये
भूतायेभूताभूमिसंस्थिताः ॥ येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया ॥ ५ ॥ अपक्रामंतुभूतानिपिशाचाःसर्व

तोदिशम् ॥ सर्वेषामविरोधेनशांतिकर्मसमारभे ॥ ६ ॥ यदत्रसंस्थितंभूतस्थानमाश्रित्यसर्वत ॥ स्थानंत्य
क्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ ७ ॥ भूतप्रेतपिशाचाद्याअपक्रामंतुराक्षसा ॥ स्थानादस्माद्व्रजंत्वन्यत्स्वी
करोमिभुवंत्विमाम् ॥ ८ ॥ भूतानिराक्षसावापियत्रतिष्ठंतिकेचन ॥ तेसर्वेप्यपगच्छन्तुशांतिकंतुकरोम्य
हम् ॥९॥ इतिमंत्रैरीशानादिसर्वदिक्षुविकीर्य देवाआयांतुयातुधानाअपयांतु विष्णोदेवयजनंरक्षस्वेतिरक्षांकु
र्यात् । उदकस्पर्शः ॥ततः पंचगव्यकरणम् ॥ गायत्र्यागोमूत्रम्। ॐ तत्सवितु० ॥१॥ गंधद्वारामितिगोमयम् ।
गंधद्वारां दुराधर्षाम् ॥२॥ आप्यायस्वेतिक्षीरम् । ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥भवावाजस्य
सङ्गथे ॥ ३ ॥ दधिक्राव्णेतिदधि । ॐ दधिक्राव्णोऽअकारिषंजिष्णोरश्वस्यवाजिनः॥सुरभिनोमुखाकरत्प्र
णऽआयूꣳषितारिषत् ॥ ४ ॥ तेजोसीत्याज्यम् । ॐ तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानाम
नाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेतिकुशोदकम् । ॐ देवस्यत्वासवितुः० ॥ ६ ॥ इतिप्रणवेनयज्ञका
ष्ठेनालोड्य । ॐ आपोहिष्ठेतित्रिभिर्मंत्रै कर्मभूमियज्ञसंभारांश्चप्रोक्षयेत् । ततोयजमानश्चतुरस्रमण्डलेभूमिं

पूजयेत् । ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवींऽयच्छपृथिवीन्दृंहंपृथिवीम्माहिंऽसीः ॥ ॐ भूर्भुवःस्वः पृथिवीकूर्मानंतदेवताभ्योनमः । इतिमंत्रेणषोडशोपचारैःसंपूजयेत् । ततःकृतांजलिः । ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ इतिमंत्रंपठेत् ॥ अथाग्निस्थापनम् । तद्यथा । यथापरिमिते तुषकेशिशर्करादिरहितेकुण्डे स्थंडिलेवा चतुरस्रांभूमिं कुशैः परिसमुह्य तान्कुशानैशान्यांपरित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेनप्रागग्रप्रादेशमात्रमुत्तरोत्तरक्रमेणत्रिरुल्लिख्य उल्लेखनक्रमेणैवानामिकांगुष्ठाभ्याममृदमुद्धृत्य जलेनाभ्युक्ष्य ततःकांस्यपात्रस्थंवह्निं द्वितीयकांस्यपात्रेणापिहितमुपसमाधाय आनीतमग्निं स्थंडिलस्याग्नेय्यांनिधाय । ॐ हुंफट् इतिमंत्रेण क्रव्यादांशं नैर्ऋत्यांदिशिपरित्यज्य ततोऽग्निंदूतमितिमंत्रेणात्माभिमुखमग्निंसंस्थापयेत् । ॐ अग्निन्दूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १ ॥ ततअग्न्यानीतपात्रेसाक्षतोदकंनिषिच्य अग्निमुखंकृत्वाध्यायेत् । ॐ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअ

स्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां२ऽआविवेश ॥१॥ अग्नेवैश्वानरशाण्डिल्यगोत्र शाण्डिल्यासित
देवलेतित्रिप्रवरान्वित भूमिमात वरुणपित मेषध्वज प्राङ्मुख ममसम्मुखोभव ॥ शांतिकेवरदनामा
ग्निप्रतिष्ठाप्य । ॐ अग्निपुरुषायनम । इतिमंत्रेणवायव्यकोणेवह्नि अग्निषोडशोपचारै संपूज्य प्रार्थयेत् ।
अग्निप्रज्वलितवंदेजातवेदहुताशनम् ॥ हिरण्यवर्णमनलसमृद्धंविश्वतोमुखम् ॥ १ ॥ इत्यग्निस्थापनम्॥अथन
वग्रहस्थापनप्रयोग ॥ तत्रादौ ग्रहपीठमध्येसूर्यमंडलस्याग्रेउदक्संस्थंपंक्तिरूपेणगणपतिंदुर्गांक्षेत्रपालंच
स्थापयेत् । तत्रमंत्रा । ॐ गणानान्त्वा॰ ॐ भूर्भुव स्व गणपते इहागच्छ इहतिष्ठ ॐ गणपतयेनम गण
पतिमावाहयामि ॥ १ ॥ ॐ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पी
लवासिनीम् । ॐ भूर्भुव स्व दुर्गेइ॰ दुर्गामा॰ ॥२॥ ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्ने॥
एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरक्षेत्रंजित्यायदेवा॰ ॐ भूर्भुव॰ क्षेत्राधिपते इहागच्छ इहतिष्ठ । ॐक्षेत्रा
धिपतयेनम क्षेत्राधिपतिमावाहयामि ॥ ३ ॥ ॥ अथग्रहाणामावाहनम् । तत्र पीठमध्येवर्तुलेद्वादशांगुले

मण्डले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैरावाहयेत् । ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हि
रण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐभूर्भुवःस्वः कलिंगदेशोद्भव काश्यपगोत्र रक्तवर्ण भो
सूर्य इहागच्छ इहतिष्ठ ॐ सूर्यायनमः सूर्यमावाहयामि ॥ १ ॥ ततः आग्नेय्यांदिशि चतुरस्रे चतुर्विंशत्यंगु
लेमंडले प्रत्यङ्मुखं सोमं शुक्लपुष्पाक्षतैरा०।ॐइमन्देवाऽअसपत्नꣳ सुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहते
जानराज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳ
राजा ॥ ॐ भू०यमुनातीरदेशोद्भव आत्रेयगोत्र शुक्लवर्ण भोसोम इहा० ॥ २ ॥ ततोदक्षिणस्यांदिशि त्रिकोणे
त्र्यंगुलेमंडले दक्षिणाभिमुखंभौमं रक्तपुष्पाक्षतैरा० । ॐ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अ
पाꣳरेताꣳसिजिन्वति ॥ ॐ भू० अवंतिदेशोद्भव भारद्वाजगोत्र रक्तवर्ण भोभौम इहा० ॥ ३ ॥ ततश्च
ईशान्यांदिशि बाणाकारे चतुरंगुलेमंडले उदङ्मुखंबुधं पीतपुष्पाक्षतैरा० । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमि
ष्टापूर्तेसꣳ सृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत । ॐ भू० मगधदेशो

द्भव आत्रेयगोत्र पीतवर्ण भोबुध इ० ॥ ४ ॥ उत्तरस्यां दिशि लंबदीर्घचतुरस्रेपट्टाकारे षडंगुलेमण्डले बृहस्पतिं पीतपुष्पाक्षते० ॥ ॐ बृहस्पतेऽअतियदर्यो ऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततद स्मासुद्रविणन्धेहिचित्रम् ॥ ॐ भू० सिंधुदेशोद्भव आंगिरसगोत्र पीतवर्ण भोबृहस्पते इ० ॥ ५ ॥ पूर्वस्यांदि शि पंचकोणे नवांगुले मंडले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतेरा० । ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षु त्रम्पयः सोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियविपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ॐ भू० भोजकटदेशोद्भव भार्गवगोत्र शुक्लवर्ण भोशुक्रइ० ॥ ६ ॥ पश्चिमायांदिशि धनुषाकारेद्व्यंगुलेमडले प्रत्यङ्मुखशनिं कृष्णपुष्पाक्षतेरा० । ॐ शन्नो देवीरभिष्टयऽआपोभवंतुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ॐ भू० सौराष्ट्रदेशोद्भव काश्यपगोत्र कृष्णवर्ण भोशनैश्चर इ० ॥ ७ ॥ ततो नैर्ऋत्य दिशि शूर्पाकारेद्वाद शांगुले मंडले

रेषडंगुलेमंडलेदक्षिणाभिमुखंकेतुंधूम्रपुष्पाक्षतै० । ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजा यथाः ॥ ॐ भूर्भुवःस्वः अंतर्वेदिसमुद्भव जैमिनिगोत्र धूम्रवर्ण भोकेतो इहागच्छ इहतिष्ठ० ॥९॥ ॥ अथाधिदेवतास्थापनम् । तत्र सूर्यदक्षिणपार्श्वे ॐ त्र्यम्बकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ ॐ भूर्भुवःस्वः ईश्वर इहागच्छ इहतिष्ठ । ईश्वरायनमः ईश्वरमावाहयामि ॥१॥ एवंसर्वत्र । सोमदक्षिणपार्श्वे । ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यांवहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॐ भू० उमे इहा० उमायै० ॥ २ ॥ भौमदक्षिणपार्श्वे । यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ ॐ भू० स्कंद इहा० स्कंदाय० ॥ ३ ॥ बुधदक्षिणपार्श्वे । ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ॐ भू० विष्णोइ० विष्णवे० ॥ ४ ॥ गुरुदक्षिणपार्श्वे । ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽ

इपुव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठा ॰ सभेयोयुवास्य यजमानस्यवीरोजायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनःकल्प ताम् ॥ ॐ भू० ब्रह्मन्निहा० ब्रह्मणे० ॥ ५ ॥ शुक्रदक्षिणपार्श्वे । ॐ सजोषाऽइन्द्रसगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ॥ ॐ भू० इंद्र इहा० ॥ इन्द्राय० ॥ ६ ॥ शनिदक्षिणपार्श्वे । ॐ यमायत्वाङ्गिरस्वतेपितुमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्म्मः पित्रे ॥ ॐ भू० यम इहा० यमाय० ॥ ७ ॥ राहुदक्षिणपार्श्वे । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि॥ समापोऽअद्भिरग्मतसमोषधीभि रोषधीः॥ ॐ भू० काल इहा० कालाय० ॥ ८ ॥ केतुदक्षिणपार्श्वे।ॐ चित्रावसो र् स्तितेप शीय ॥ ॐ ० ःे ग ० र ० ॥ ९ ॥ ३ र म ॥ र र र रे।

नमः० ॥ २ ॥ भौमवामपार्श्वे । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः॥ॐभू०
पृथिवि इहा० पृथिव्यै० ॥ ३ ॥ बुधवामपार्श्वे । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरे
स्वाहा । ॐ भू० विष्णो इहा० विष्णवे० ॥ ४ ॥ गुरुवामपार्श्वे । ॐ त्रातारमिन्द्रमवितारमिन्द्रᳪ हवेहवेसु
हवᳪ शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳪ स्वस्तिनोमघवाधात्विन्द्रः । ॐ भू० इंद्र इहा० इंद्राय०॥५॥
शुक्रवामपार्श्वे। ॐअदित्यैरास्नासीन्द्राण्याऽउष्णीषः पूषासिघर्म्मायदीष्व॥ॐ भू० इंद्राणि इहा० इन्द्राण्यै० ॥
॥६॥ शनिवामपार्श्वे। ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तु
वयᳪ स्यामपतयोरयीणाम्॥ॐ भू० प्रजापते इ० प्रजापतये ॥७॥ राहुवामपार्श्वे०।ॐ नमोस्तुसर्पेभ्योयेकेचपृ
थिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः ॥ ॐ भू० सर्पा इहाग० सर्पेभ्यो०॥८॥केतुवामपार्श्वे। ॐ
ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्च
विवः । ॐ भू० ब्रह्मन्० ब्रह्मणेनमः ब्रह्माणमा० ॥ ९ ॥ अथपंचलोकपालस्थापनम् ॥ राहोरुत्तरतः । ॐ

गणानान्त्वा० ॐ भू० गणपते इहा० गणपतये० ॥ १ ॥ शनेरुत्तरत । ॐ अबेऽअंबिकेंबालिकेनमानयतिक
श्चन ॥ ससस्त्यश्वक सुभद्रिकांकाम्पीलवासिनीम् ॥ ॐ भू० दुर्गे इहा० दुर्गायै० ॥ २ ॥ रवेरुत्तरत । ॐ
आनोंनियुद्धिः शुतिनीभिरध्वरठं सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयंपातस्व
स्तिभिः सदानः ॥ ॐ भू० वायो इहा० वायवेनम ०॥३॥ राहोर्दक्षिणे । ॐ घृतङ्घृतपावानः पिवतवसांवसा
पावानः पिवतान्तरिक्षस्यहुविरसिस्वाहा ॥ दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ ॐ भू०
आकाश इहा० आकाशाय० ॥ ४ ॥ केतोर्दक्षिणे । ॐ यावाङ्कशामधुमत्यश्विनासूनृतावती॥तयायज्ञम्मिमि
क्षताम् ॥ ॐ भू० अश्विनौ इहागच्छतं अश्विभ्यांनम ॥५॥ अथप्रागादित पीठसमंताद्दिक्पालानावाहयेत् ॥
पूर्वे । ॐ त्रातारमिन्द्रठं मवितारमिन्द्रठं हवेहवेसुहवठं शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रठं स्वस्ति
नोमघवाधात्विन्द्रः ॥ ॐ भू० इंद्र इहा० इन्द्रायनम ०॥१॥ आग्नेय्याम् । ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघो
नोरक्षतन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषठं रक्षमाणस्तवव्रुते ॥ ॐ अग्ने इहा० अग्नये० ॥ २ ॥

दक्षिणे।ॐ यमायत्वांगिरस्वतेपितृमते स्वाहा ॥ स्वाहाघर्मायस्वाहाघर्मः पित्रे॥ॐभू० यम इहा० ॥३॥नैर्ऋ
त्याम्।ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदे
विनिर्ऋतेतुभ्यमस्तु ॥ ॐ भू० निर्ऋतेइहा० ॥ ४ ॥ पश्चिमे । ॐ तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयज
मानोहविर्भिः ॥ अहेडमानोवरुणेहवोध्युरुशꣳस मानऽआयु प्रमोषीः॥ॐ भू० वरुणइहा० ॥५॥ वायव्याम् ।
ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयं
पात स्वस्तिभिः सदानः॥ॐ भू० वायो इहा० ॥६॥ उत्तरे ॐ वयꣳ सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजा
वन्तः सचेमहि ॥ ॐ भू० सोम इहा० ॥ ७ ॥ ईशान्याम् । ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वम
वसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ॐ भू० ईश्वर इहा० ॥ ८ ॥ पूर्वे
शानयोर्मध्ये ऊर्ध्वायाम् । ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्त्येभरहूतौसजोषाः ॥ यꣳशꣳसतेस्तुवतेधा

यिपज्रऽइन्द्रज्येष्ठाऽअस्मॉर॥ऽअवन्तुदेवा॥ । ॐ भू० ब्रह्मन्० ब्रह्मण० ॥९॥ निर्ऋतिपश्चिमयोर्मध्ये अथ स्थायाम्। ॐ स्योनापृथिविनो० भवानृक्षरानिवेशनी॥ यच्छानुः शर्मसप्रथाः । ॐ भूर्भुव स्व अनन्त इहागच्छ इहतिष्ठ अनंतायनम अनंतमावाहयामि॥ १०॥ अथ मडलमध्यस्थापितपितामहाद्यावाहनम्॥ ॐ ब्रह्मंयज्ञान०॥ॐ भूर्भुव स्व ब्रह्मन्निहा० ॥ १ ॥ ॐ त्र्यंबकयजामहे० ॥ ॐ भू० शिवइहा० ॥ २ ॥ ॐ इदविष्णुर्विचक्रमे० ॥ ॐ भू० विष्णो इहा० ॥३॥ ॐ गणानात्वा० ॐभू० गणपते इहा० ॥४॥ ॐ श्रीश्चतेल क्ष्मीश्च० ॥ ॐ भू० लक्ष्मि इहा० ॥५॥ ॐ पञ्चनद्यः सरस्वती० ॥ॐ भू०। सरस्वति इहा० ॥६॥ ॐ अंबेऽअं बिकेंबालिकेनमानयतिकश्चन॥ ससस्त्यश्वक ६ सुभद्रिकाकांपीलवासिनीम्॥ ॐ भू० दुर्गेइहा० ॥ ७ ॥ ॐ नहिस्पशमविंदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षैत्रजित्यायदे वा॥ ॐ भू० क्षेत्रपाल इहा० ॥८॥ ॐ भुतायत्वानारातयेस्वराभिविक्स्येषंदृंहंतादुर्य्याः ॥ पृथिव्यामुर्व्व न्तरिक्षमन्वेमिपृथिव्यास्त्वानाभौंसादयाम्यदित्याऽउपस्थेग्नेहव्यर्ठ रक्ष॥ ॐ भू० भूतानि इहागच्छत०

॥ ९ ॥ ॐ वास्तोष्पतेप्रतिजानिह्यस्मान्त्स्वावेशोऽअनमीवोभवान॑ः ॥ यत्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदे शंचतुष्पदे ॥ ॐ भू॰ वास्तोष्पते इहा॰ ॥१०॥ ॐ विश्वकर्म्मन्हविषाव्वर्द्धनेनत्रातारमिंद्रमकृणोरवद्ध्यम् ॥ तस्मैविशःसमनमंतपूर्वीरयमुग्रोविहव्योयथासत् ॥ ॐ भूर्भुवःस्वः विश्वकर्मन्निहागच्छइह॰ विश्वकर्मणे नमः ॥११॥ इत्यावाह्य । ॐ मनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टम्॥यज्ञठंसमिमंदधातु ॥विश्वेदेवासऽइहमादयन्तामो ३ म्प्रतिष्ठ ॥ १ ॥ आदित्यादिग्रहमंडलदेवताभ्यो नमःसुप्रतिष्ठितावरदाभवत । इति प्रतिष्ठाप्य देशकालौसंकीर्त्य इहसकलशांतिपूर्वकं सकलदुरितोपशमनद्वारा श्रीपरमेश्वरप्रीत्यर्थं अमुकशांत्याख्यकर्मणि सूर्यादिनवग्रहाणामधिदेवतानां प्रत्यधिदेवतानां पंचलोकपालानां दशदिक्पालानांसक्षेत्रपालगणपतिवरुणादीनांच पूजनंकरिष्ये इतिसंकल्पयेत् । ततः। ॐ ग्रहाऽऊर्ज्जाहुतयोव्यन्तोविप्रायमतिम् ॥ तेषांविशिप्रियाणाम्वोहमिषमूर्ज्जठंसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १ ॥ ॐ सूर्यादिग्रहेभ्यो नमः । रुद्राद्यधिदेवताभ्यो नमः। अग्न्यादिप्रत्यधिदेव

ताभ्यो नम । विनायकादिपंचलोकपालेभ्यो नम । इंद्रादिदशदिकपालेभ्यो नम । ब्रह्मादिविश्वकर्मांतेभ्यो नम । इतिनाममंत्रे प्रत्येकं तत्तद्वर्णयुक्तगंधपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणादिभि संपूज्य ततोग्रहवेदीसमीपे भूमौ पूर्वोक्तनाममंत्रे ग्रहदेवताभ्यो बलीन्दद्यात् । तद्यथा । सूर्याय गुडोदनम् । सोमाय घृतपायसम् । कुजाय मसूरान्नम् । बुधाय क्षीरोदनम् । गुरवे दध्योदनम् । शुक्राय घृतोदनम् । शनैश्चराय तिलपिष्टम् । राहवे तिलमाषान्नम् । केतवे चित्रौदनम् । अन्येभ्य पायसबलीन्दत्त्वा प्रार्थयेत् ॥ आदिदेवनमस्तुभ्यसप्तसप्तेदिवाकर ॥ आयुरारोग्यंमेदेहिकुरुशांतिंशुभप्रदाम् ॥ १ ॥ रोहिणीशसुधामूर्तेसुधारूपसुधाशन ॥ सोमसौम्योभवास्माकसर्वारिष्टनिवारय ॥ २ ॥ कुजकुम्भभवोपित्वंमंगल परिगद्यसे ॥ अमंगलंनिहत्याशु सर्वदायच्छमंगलम् ॥ ३ ॥ बुधस्त्वबुद्धिजननोबोधवान्सर्वदानृणाम् ॥ नत्वावबोधं कुरुते सोमपुत्रनमोस्तुते ॥ ४ ॥ वेदशास्त्रार्थतत्त्वज्ञज्ञानविज्ञानपारग ॥ विबुधार्तिहरोनित्यंदेवाचार्यनमोऽस्तुते ॥ ५ ॥ भार्गवो भर्गजनन शुचि श्रुतिविशारद ॥ हत्वाग्रहकृतान्दोषानायुरारोग्यंदेहिमे ॥ ६ ॥ कोणनीलांजनप्रख्यंमंदचेष्टाप्रसारिणम् ॥ छायामार्तंडसंभूतंतंनमामिशनैश्चरम् ॥ ७ ॥ महाशिरामहावक्त्रोदीर्घदंष्ट्रोमहाबल ॥ मुंडका

योर्ध्वकेशिश्चपीडांहरतुमेतमः ॥ ८ ॥ अधःस्थार्धागभोःकेतोपलधूमसमप्रभ ॥ रौद्ररूपनमस्तुभ्यंमम
पीडांनिराकुरु ॥ ९ ॥ इतिप्रार्थ्य । अनयापूजया आदित्यादिग्रहमंडलदेवताः प्रीयंताम् । इतिपठेत् ॥ ततः ।
ईशान्यांग्रहसंबंधिरुद्रकलशस्थापनम् ॥ महीद्यौरितिभूमिंस्पृष्ट्वा । ॐ महीद्यौः पृथिवीचंनऽइमंयज्ञम्मिं
मिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधयः समितियवान्क्षिप्त्वा । ॐ ओषधयः समवदन्तसोमेन
सहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ २ ॥ आजिघ्रकलशेतिकलशंस्थापयेत् ॥ ॐ
आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविं
शताद्रयिः ॥ ३ ॥ ॐ वरुणस्योत्तंभनमितिजलंपूरयेत् ॥ ४ ॥ गंधद्वारांदुराधर्षामितिगंधंप्रक्षिपेत् ॥
॥ ५ ॥ याऽओषधीरितिसर्वौषधीः ॥ ॐ याऽओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणा
महꣳशतन्धामानिसप्तचं ॥ ६ ॥ कांडात्कांडादितिदूर्वाः ॥ ७ ॥ अश्वत्थेवेतिपंचपल्लवान् ॥ ॐ
अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ८ ॥ स्योनापृ

थिवीतिसप्तमृद । ॐ स्योनापृथिविनोभवानुक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ ९ ॥ याः
फलिनीरिति पूगीफलम् । ॐ याः फलिनीर्याऽअफला० ॥ १० ॥ परिवाजपतिरिति पंचरत्नानि ॥
ॐपरिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ११ ॥ हिरण्यगर्भेति हिरण्यम् । ॐ हिर
ण्यगर्भसमं० ॥ १२ ॥ युवासुवासाइति रक्तवस्त्रेण वेष्टयेत् । ॐ युवासुवासा परिवीतऽआगात्सऽउश्रेयान्भ
वतिजायमान ॥ तधीरास कवयऽउन्नयन्तिस्वाध्योमनसादेवयन्त ॥ १३ ॥ पूर्णादर्वीति पूर्णपात्रमुपरि
न्यसेत् । ॐ पूर्णादर्विपरापत० ॥ १४ ॥ तत्र । ॐ तत्वांयामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोवरुणेहवोध्युरुशंसमानऽआयुः प्रमोषीः ॥ १ ॥ ॐ भूर्भुव स्व वरुण इहागच्छ इहतिष्ठ ।
वरुणं सांगं सपरिवारं आवाहयामि । इति वरुणमावाह्य । ॐ अपांपतिवरुणायनम । इति मंत्रेण षोडशोप
चारे संपूजयेत् ॥ ततोगगाद्यावाहनम् ॥ सर्वे समुद्रा सरितस्तीर्थानि जलदा नदा ॥ आयांतु मम
शांत्यर्थं दुरितक्षयकारका ॥ १ ॥ तत कलशाभिमत्रणम् । कलशस्य मुखे विष्णु कंठे रुद्र समाश्रित ।

मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥१॥कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा॥ऋग्वेदोथयजु र्वेदः सामवेदो ह्यथर्वणः ॥२॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ प्रार्थना ॥ देवदानवसंवादे मथ्य माने महोदधौ ॥ ३ ॥ उत्पन्नोसि यदा कुंभविधृतो विष्णुनास्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वेत्वयि स्थिताः ॥ ४ ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजा पतिः ॥ ५ ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः ॥ ६ ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥७॥ इति कलशस्थापनम् । (अनेनकलशोदकेन अभिषेकसमये पत्न्यासहयजमानमभिषिंचेत्) ॥ अथ सर्वतोभद्रमंडलदेवतापूजनम्। आचम्य प्राणानायम्यदेशकालौसंकीर्त्य अद्यामुकशांत्याख्येकर्मणि एतत्सर्वतोभद्रमंडले वेदमंत्रैर्ब्रह्मादिष ट्पंचाशद्देवतावाहनं प्रतिष्ठापूजनं च करिष्ये। इति संकल्प्य । पुष्पाक्षतान्गृहीत्वा मध्येब्रह्माणमावाहयेत् । ॐ ब्रह्म यज्ञानम्प्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिम संतश्चविवः ॥ ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छ इहतिष्ठ । ॐ ब्रह्मणेनमः ॥ १ ॥ उत्तरे सोमम् । वयठं सोम

व्रतेतवमनंस्तनूषुबिभ्रत ॥प्रजावन्तं सचेमहि । ॐ भूर्भुव स्व सोम इहा० ॐ सोमायनम ॥२॥ ईशान्या
मीशानम् । ॐ तमीशानञ्जगतस्तस्थुषस्पतिंन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षि
तापायुरदब्धः स्वस्तये । ॐ भू० ईशान इहा० ॐ ईशानायनम ॥ ३ ॥ पूर्वस्यां दिशि इंद्रम् ॐ त्रातार
मिन्द्रमवितारमिन्द्रंहवे० हवेहवेसुहवंशूरमिन्द्रम ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रंस्वस्तिनोमघवा
धात्विन्द्रं । ॐ भू० इंद्र इ० ॐ इंद्रायनम ॥ ४ ॥ आग्नेय्यामग्निम् । ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्दे
वस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषा७ सिप्रमुमुग्ध्यस्मत् । ॐ भू० अग्ने
इहा० ॐ अग्नयेनम ॥५॥ दक्षिणे यमम् । ॐ सुगन्नः पंथाम्प्रदिशन्नऽएहिज्योतिष्मध्येह्यजरन्नऽआयुः ॥ अपै
तुमृत्युरमृतम्नऽआगाद्वैवस्वतोनोऽअभयंकृणोतु । ॐ भू० यम इहा० ॐ यमायनम ॥ ६ ॥ नैर्ऋत्यां नि
र्ऋतिम् । ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमो

देविनिर्ऋतेतुभ्यमस्तु ॐ भू० निर्ऋते इहा० ॐ निर्ऋतये नमः ॥ ७ ॥ पश्चिमे वरुणम् । ॐ तत्वायामि
ब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳ समानऽआयुः प्रमोषीः॥ ॐ
भू० वरुण इहा० ॐ वरुणाय० ॥८॥ वायव्यां वायुम्। ॐ आनो नियुद्भिःशतिनीभिरध्वरꣳ सहस्रिणीभिरु
पयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॐ भू० वायो इहा० ॐ
वायवेनमः ॥९॥ ईशानपूर्वयोर्मध्ये ब्रह्माणम् । ॐ अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यꣳ
शꣳसतेस्तुवतेधायिपज्रऽइंद्रज्येष्ठाऽअस्माँऽ ॥ ऽअवन्तुदेवाः ॥ ॐभू० ब्रह्मन्० ब्रह्मणे० ॥ १० ॥
वायुसोमयोर्मध्ये अष्टवसून् । ॐ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देव
स्त्वासवितापुनातु ॥ वसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः । ॐ भू० अष्टौ वसव इहागच्छंतु इह तिष्ठंतु
ॐ वसुभ्योनमः॥११॥सोमईशानयोर्मध्ये रुद्रान् । ॐ नमस्तेरुद्रमन्यवऽउतोतइषवेनमः ॥ बाहुभ्यामुतते
नमः॥ॐभू०रुद्रा इहागच्छंतु०ॐरुद्रेभ्योनमः॥१२॥ईशानपूर्वयोर्मध्ये आदित्यान्। ॐअदितिर्द्यौरदितिरन्त

रिक्षमदितिर्म्मातासपितासपुत्र६॥ विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्॥ ॐभू॰आदित्या इहा॰आदित्येभ्यो नम ॥१३॥इन्द्राग्न्योर्मध्येऽश्विनौ॰।ॐअश्विनातेजसाचक्षुः प्राणेनसरस्वतीवीर्य्यम्॥ वाचेन्द्रोवलेनेन्द्रायदधुरिन्द्रियम्॥ॐ भू॰ अश्विनौ इहागच्छतं इहतिष्ठतम्।ॐ अश्विभ्यां नम ॥१४॥अग्नियमयोर्मध्येविश्वेदेवान्सपितॄन्। ॐ विश्वेदेवासऽआगतशृणुतामऽइमꣳ हवम्॥ एदवर्हिर्न्निषीदत। ॐ भू॰ विश्वेदेवा इहा॰ ।ॐ विश्वेभ्योदेवेभ्यो नम ॥१५॥ तत्रैव॥ॐ आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्द्देवयानैः॥अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान्॥ॐ भू॰ पितर इहा॰। पितृभ्यो नम ॥१६॥यमनिर्ऋत्योर्मध्ये यक्षान्॥ ॐ अभित्यदेवꣳ सवितारमोण्योः कविक्रतुमर्च्चामिसत्यसवꣳ रत्नधामभिप्प्रियम्मतिङ्कविम्॥ ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुः कृपास्वः प्रजाभ्यस्त्वाप्रजास्त्वानुप्प्राणन्तुप्रजास्त्वमनुप्राणिहि। ॐ भू॰ यक्षा इहा॰। ॐ यक्षेभ्यो नम ॥ १७ ॥ निर्ऋतिवरुणयोर्म

ध्ये भूतनागान् । ॐ भुतायैत्वानारांतयेस्वरभिविकख्येषंदृठंहन्तान्दुर्य्यां÷पृथिव्यामुर्वन्तरिक्षमन्वेमिपृथि
व्यास्त्वानाभौसादयाम्यदित्याऽउपस्त्थेग्नेहव्यरठं रक्ष । ॐ भू० भूतानिइहा० ॐ भूतेभ्योनमः ॥ १८ ॥
तत्रैवसर्पान् । ॐ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यं÷सर्प्पेभ्योनमं÷ । ॐ भू०
सर्पाइहा० ॐ सर्पेभ्यो नमः ॥ १९ ॥ वरुणवाय्वोर्मध्येगंधर्वाप्सरसः । ॐ गन्धर्वस्त्वाविश्वावसुंपरिदधातु
विश्वस्यारिष्टयैयजमानस्यपरिधिरस्यग्निरिडऽईडित९ ॥ इन्द्रस्यवाहुरसिदक्षिणोविश्वस्यारिष्टयैयजमान
स्यपरिधिरस्यग्निरिडऽईडित॥मित्रावरुणौत्वोत्तरत९परिधत्तांध्रुवेणधर्म्मणाविश्वस्यारिष्टयैयजमानस्यपरिधि
रस्यग्निरिडऽईडित९ । ॐ भू० गंधर्वा इहा० ॐ गंधर्वेभ्योनमः ॥२०॥ तत्रैवाप्सरसः । ॐ अयंपुरोहरिकेश९
सूर्य्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानिग्रामण्यौ ॥ पुंजिकस्त्थलांचक्रतुस्त्थलाचाप्सरसौदंक्ष्णवं÷पुश
वोहेतिं÷पौरुषेयोवध९प्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाजम्भेद

म्म ॥ ॐ भू० अप्सरस इहागच्छत इहतिष्ठत । ॐ अप्सरोभ्योनम ॥२१॥ ब्रह्मसोमयोर्मध्येस्कंदनंदी
श्वरशूलंच० । ॐ यदक्रंदः प्रथमञ्जायमानउद्यन्त्समुद्रादुतवापुरीषात ॥ श्येनस्यपक्षाहरिणस्यबाहूउ
पस्तुत्यम्महिजातन्तेऽअर्वन् ॥ ॐ भू० स्कंद इहा० ॐ स्कंदाय नम ॥ २२ ॥ तदुत्तरे । ॐ आशुःशिशानो
वृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शतᳫं सेनाऽअजयत्साकमिन्द्र-
ॐ भू० नंदिन् इहा० । ॐ नदीश्वराय नम २३ तत्रैव । ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥
समापोऽअद्भिरग्मतसमोषधीभिरोषधीः । ॐ भू० शूलमहाकालौ इहागच्छत० ॐ शूलमहाकालाभ्यां
नम ॥ २४ ॥ ब्रह्मेशानयोर्मध्ये प्रजापतिन् । ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरितावभूव ॥ यत्का
मास्तेजुहुमस्तन्नोऽअस्तुवयᳫं स्यामपतयोरयीणाम् । ॐ भू० प्रजापतय इहा० ॐ प्रजापतिभ्यो नम ॥
॥ २५ ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गाम् ॥ ॐ अवेऽअंबिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः
सुभद्रिकांकाम्पीलवासिनीम् । ॐभू० दुर्गे इहा० ॐ दुर्गायै नम ॥२६॥ दुर्गापूर्वे विष्णुं० । ॐ इदम्विष्णु

विंचक्रमेत्रेधानिदंधेपदम् ॥ समूंढमस्यपाꣳसुरेस्वाहा ॥ ॐभू० विष्णो इहा० ॐविष्णवेनमः ॥ २७ ॥ ब्रह्माग्न्यो
र्मध्येपितॄन् ०।ॐउदीरतामवरऽउतपरासऽउन्मध्यमाःपितरःसोम्यासः॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु
पितरोहवेषु । ॐ भू० पितर इहा० ॐपितृभ्योनमः॥२८॥ब्रह्मयमयोर्मध्येमृत्युरोगान् ०।ॐ परंमृत्योअनुपरे
हिपन्थांयस्तेअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान् । ॐ भू०
मृत्युरोग इहा० ॐ मृत्युरोगेभ्योनमः ॥ २९ ॥ ब्रह्मनिर्ऋत्योर्मध्येगणपतिम् । ॐ गणानांत्वागणपतिꣳ
हवा० । ॐ भू० गणपतेइहा० ॐ गणपतयेनमः ॥ ३० ॥ ब्रह्मवरुणयोर्मध्ये । ॐ अपोऽअद्यान्वचारिषꣳ
रसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासꣳसृजवर्चसाप्रजयाचधनेनच ॥ ॐ भू० आप इहा०
ॐ अद्भ्यो नमः ॥३१॥ ब्रह्मवायुमध्येमरुतः । ॐ बृहदिन्द्रायगायतमरुतोवृत्रहंतमम् ॥ येनज्योतिरजनय
न्नृतावृधोदेवंदेवायजागृवि । ॐ भू० मरुत इहा० ॐ मरुद्भ्यो नमः ॥ ३२ ॥ ब्रह्मणःपादमूले पृथिवीम् । ॐ

मुहीयो॑ पृथिवीर्चनऽइर्मयज्ञम्मिमिक्षताम् ॥ पिपृताम्नोभरीमभिः ॥ ॐ भू० पृथिवि इहा० । ॐ पृथिव्यैनम
॥ ३३ ॥ तत्रैव गंगादिसरित । ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्णिया ॥ असिक्रियामरु
द्वृधेवितस्तयार्जीकीयेशृणुह्यासुपोमया॥ॐभू० गंगादिसप्तसरित इहा० ॐ गंगादिसरिद्भ्योनम ॥३४॥ तत्रैव
सप्तसागरान् । ॐ मापोमौषधीर्हिंसीधाम्नोराजंस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याऽइतिवरुणेतिशपा
महेततोवरुणनोमुञ्च ॥ ॐ भू० सागरा इहा० ॐ सप्तसागरेभ्यो नम ॥ ३५ ॥ तदुपरिमेरुंनाममंत्रेणावा
हयेत् ॥ ॐ भू० मेरो इहा० ॐ मेरवेनम ॥ ३६ ॥ ततो मंडलाद्बहि सोमादिसन्निधौक्रमेण आयुधान्यावा
हयेत्॥ उत्तरे गदामावाहयामि स्थापयामि ॐ भू० गदे इहा० ॐ गदायै नम ॥ ३७ ॥ ईशान्याम् त्रिशू
लमा० ॐ त्रिशूलाय० ३८ ॥ पूर्वे० वज्रमा० ॐ वज्राय० ॥ ३९ ॥ आग्नेय्याम् शक्ति० ॐ शक्तये नम ॥
॥ ४० ॥ दक्षिणस्याम् दंडमा० ॐ दंडाय नम ॥ ४१ ॥ नैर्ऋत्याम् खड्गमावा० ॐ खड्गाय० ॥ ४२ ॥
पश्चिमे पाशमावा० ॐ पाशाय० ॥ ४३ ॥ वायव्याम् अंकुशमावा० । ॐ अंकुशाय० ॥ ४४ ॥ तद्वाह्ये ।
उत्तरे ॐ गौतमायनम ॥४५॥ ईशान्याम् ॐ भारद्वाजाय० ॥ ४६ ॥ पूर्वे ॐ विश्वामित्राय० ॥ ४७ ॥

आग्नेय्याम् ॐ कश्यपाय० ॥ ४८ ॥ दक्षिणे ॐ जमदग्नये० ॥ ४९ ॥ नैर्ऋत्याम् ॐ वसिष्ठाय नमः ॥५०॥ पश्चिमे ॐ अत्रये नमः ॥ ५१ ॥ वायव्यां ॐ अरुंधत्यैनमः ॥ ५२ ॥ तद्बाह्ये पूर्वादिक्रमेण । पूर्वे ॐ ऐंद्र्यै नमः ॥ ५३ ॥ आग्नेय्याम् ॐ कौमार्यै० ॥५४॥ दक्षिणस्याम् ब्राह्म्यै नमः ॥ ५५ ॥ नैर्ऋत्याम् ॐ वाराह्यै नमः ॥ ५६ ॥ पश्चिमायाम् ॐचामुंडायै० ॥५७॥ वायव्याम्ॐ वैष्णव्यै नमः ॥५८॥ उत्तरस्याम् ॐ माहेश्वर्यै० ॥ ५९ ॥ ईशान्याम् ॐ वैनायक्यै नमः ॥ ६० ॥ इत्यावाह्य । ॐ मनोजूतिर्जुषतामिति प्रतिष्ठाप्य यथालब्धोपचारैः ब्रह्मादीन् संपूज्य वेदीमध्ये पद्मे ताम्रकलशंस्थापयेत् ॥ कलशस्थापनप्रयोगस्तु । ॐ महीद्यौरितिक्रमेण पूर्णपात्रनिधानांतं पूर्ववत् ज्ञेयः । ततः कलशोपरि स्वर्णमयींप्रधानदेवप्रतिमामग्न्युत्तारणपूर्वकं सन्निधाय पट्टवस्त्राद्यैराच्छाद्य पुरुषसूक्तेनषोडशोपचारैः संपूजयेत् ॥ तद्यथा । अथाग्न्युत्तारणम् । तत्र तावत्साचार्य्यो यजमानः देशकालौसंकीर्त्य अस्याः स्वर्णमय्यमुकदेवप्रतिमायाघटनादिदोषपरिहारार्थं अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये । मूर्तिंघृतेनाभ्यज्य उपरिदुग्धजलधारां कुर्यात् । अग्न्युत्तारणमंत्राः । ॐ समुद्रस्यत्वावकयाग्नेपरिव्ययामसि॥पावकोऽअस्मभ्यंशिवोभव॥१॥हिमस्यत्वाजरायुणाग्नेपरि

व्ययामसि ॥ पावकोऽअस्मभ्यंᳬ शिवोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरन्नदीष्वा ॥ अग्नेपित्तमपामसिमण्डू
किताभिरागहिसेमन्नोयज्ञंपावकवर्णᳬ शिवङ्कृधि ॥३॥ अपामिदंन्ययनᳬ समुद्रस्यनिवेशनम्॥अन्याँस्तेऽ
अस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यंᳬ शिवोभव ॥ ४ ॥ अग्नेपावकरोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्
वक्षियक्षिच ॥ ५ ॥ सनः पावकदीदिवोग्ने देवाँ २॥ऽइहावह ॥ उपयज्ञᳬहविश्चनः ॥ ६ ॥ पावकयायश्चितय
न्त्याकृपाक्षामन्रुरुचऽउपसोनभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणेनततृषाणोऽअजरः ॥ ७ ॥ नमः
स्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यंᳬ शिवोभव ॥ ८ ॥
नृषदेवेडप्सुषदेवेडबर्हिषदेवेडवनसदेवेडस्वर्विदेवेट् ॥ ९ ॥ येदेवादेवानांयज्ञियायज्ञियानाᳬ संवत्सरीणमुपभागमासं
ते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयंपिबन्तुमधुनोघृतस्य ॥१०॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणः पुरऽ
एतारोऽअस्य ॥ येभ्योनऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु ॥ ११ ॥ प्राणदाऽअपानदा

व्यानदावर्चोदावरिवोदा॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳ शिवोभव ॥ १३ ॥ ततः प्राण प्रतिष्ठांकुर्यात् । ॐ आंह्रींक्रौंयंरंलंवंशंषंसंहंक्षंहंसःसोहम् । अस्या अमुकदेवप्रतिमायाः प्राणा इह प्राणाः । पुनः ॐ आंह्रींक्रौंयंरंलंवंशंषंसंहंक्षंहंसः सोहम् । अस्या अमुकदेवप्रतिमायाः जीव इह स्थितः पुनः ॐ आं ह्रींक्रौंयंरंलंवंशंषंसंहंक्षंहंसः सोहम् ।अस्या अमुकदेवप्रतिमायाः सर्वेंद्रियाणिवाङ्मनस्त्वक्चक्षुः श्रोत्रजिह्वा घ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठंतु स्वाहा । ॐ मनोर्जूतिर्जुषता० ॥ एषवैप्रतिष्ठा० इति प्रतिष्ठाप्य । वृत्रस्यासीतिनेत्रोन्मीलनम् । ॐ वृत्रस्यासिकनीनकश्चक्षुर्दाऽअसिचक्षुर्म्मेदेहि ॥ गंधा दिपंचोपचारान्दत्वा संस्कारसिद्ध्ये षोडशप्रणवावृत्तिकुर्यात् ॥ अनेनास्या अमुकदेवप्रतिमाया गर्भाधाना दिषोडशसंस्कारान् संपादयामि इतिवदेत् । इतिप्राणप्रतिष्ठांकृत्वा पूजयेत् ॥ ॐ सहस्रशीर्षापुरुषः सहस्रा क्षः सहस्रपात् ॥ सभूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ इत्यावाहनम् ॥ १ ॥ पुरुषऽएवेदꣳसर्वंयद्भूतंय च्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥ इत्यासनम् ॥ २ ॥ एतावानस्यमहिमातोज्यायाँश्चपूरुः

पः ॥ पादोस्यविश्वाभुतानित्रिपादस्यामृतन्दिवि ॥ इतिपाद्यम् ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभ
वत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ इत्यर्घ्यम् ॥ ४ ॥ ततोविराडजायतविराजोऽअधि
पूरुषः ॥ सजातोऽअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ इत्याचमनम् ॥ ५ ॥ तस्माद्यज्ञात्सर्वहुतःसम्भृतंपृष
दाज्यम् ॥ पशूंस्तांश्चक्रेवायव्यानारण्याग्राम्याश्चये ॥ इतिस्नानम् ॥ ६ ॥ पय पृथिव्यामित्यादिपचमंत्रे
पचामृतस्नानंकारयेत् । पुन शुद्धस्नानम् । तस्माद्यज्ञात्सर्वहुतऽऋचःसामानिजज्ञिरे ॥ छंदांसिजज्ञिरे
तस्माद्यजुस्तस्मादजायत ॥ इतिवस्त्रम् ॥ ७ ॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः ॥ गावोहजज्ञिरेतस्मा
त्तस्माज्जाताऽअजावयः ॥ इतियज्ञोपवीतम् ॥ ८ ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषञ्जातमग्रतः ॥ तेनदेवाऽअयजन्त
साध्याऽऋषयश्चये ॥ इतिगंधम् ॥ ९ ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किंबाहूकि
मूरूपादाऽउच्येते ॥ इतिपुष्पाणि ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ऊरूतदस्ययद्वैश्यःपद्भ्या

ं७शूद्रोऽअजायत ॥ इतिधूपम् ॥११॥ चंद्रमामनसोजातश्चक्षोः॰सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्राणश्चमुखा
दग्निरजायत ॥ इतिदीपम् ॥ १२ ॥ नाभ्याऽआसीदंतरिक्षंशीर्ष्णोद्यौःसमवर्तत ॥ पद्भ्याम्भू
मिर्दिशः॰श्रोत्रात्तथालोकाँ २ ॥ ऽअकल्पयन् ॥ इतिनैवेद्यम् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥
वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः॥ इतिदक्षिणाम् ॥१४॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः
कृताः॥देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम्॥ इतिप्रदक्षिणाम्॥१५॥यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्र
थमान्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याः सन्तिदेवाः ॥ इति मंत्रपुष्पांजलिम् ॥ १६ ॥ इति
षोडशोपचाराः समाप्ताः ॥ अथकुशकंडिका ॥ तत्रादौ कुंडदक्षिणतोयजमानउपविश्य । सकुशयवजलान्या
दाय । देशकालौसंकीर्त्य । ॐ अमुकगोत्रोऽमुकशर्माहं अमुकशांत्याख्यकर्मणि इदंहविर्द्रव्यं सूर्यादिग्रहे
भ्यईश्वराद्यधिदेवताभ्योऽग्न्यादिप्रत्यधिदेवताभ्यो विनायकादिलोकपालेभ्य इंद्रादिदिक्पालेभ्यो ब्रह्मविष्णु
शिवगणपत्यंबिकाभूतग्रामविश्वकर्मस्विष्टकृद्वरुणाग्निवायुसूर्यप्रजापत्यादिपूर्वोत्तरांगदेवताभ्यःसर्वाभ्योन

मम ॥ इति द्रव्यत्यागं कुर्यात् । तत आचार्योऽग्नेर्दक्षिणत परिस्तरणभूमिं त्यक्त्वा ब्रह्मणे आसनं दत्वा तदुपरिप्रागग्रान्कुशानास्तीर्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय अस्मिन्नमुकशांत्याख्यकर्मणि त्व मे ब्रह्मा भव। इत्यभिधाय । वरणकर्मणा पूर्वसंपादितं ब्राह्मणं तदभावे पंचाशत्कुशनिर्मित कल्पितासने उपवेशयेत् । तत प्रणीतापात्रं पुरत कृत्वा जलेनापूर्य्य कुशत्रयेणाच्छाद्य ब्रह्मणोमुखमवलोक्य अग्नेरुत्तरत कुशोपरि निदध्यात् । तत परिस्तरणम् । बर्हिषश्चतुर्थभागमादाय चतुर्भिर्दर्भैरुत्तराग्रैराग्नेयादीशानान्तम् । प्रागग्रैर्ब्रह्मणोग्निपर्यंतम् । उदगग्रैर्नैर्ऋत्याद्वायव्यांतम् । प्रागग्रैरग्नित प्रणीतापर्यंतं परिस्तरणंकृत्वा तत अग्नेरुत्तरत पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम् । पवित्रकरणार्थं पवित्रे साग्रेअनंतगर्भेद्वेकुशपत्रे । प्रोक्षणीपात्रम् । आज्यस्थाली।चरुस्थाली।संमार्जनकुशा पंच । उपयमन कुशा सप्त । समिधस्तिस्त्र पालाश्य प्रादेशमात्रा । स्रुव खादिरोहस्तमात्र । आज्यं गव्यम् । तण्डुला । पूर्णपात्रम् । दक्षिणावरोवा । पवित्रच्छेदनकुशानां पूर्वपूर्वदिशिक्रमेणासादनीयम् । तत पवित्रच्छेदने पवित्रकरणम् । द्वयो पवित्रयोरुपरिपवित्रत्रयंनिधाय अग्रत प्रादेशमात्रविहाय त्रिभि कुशैर्द्वेकुशतरुणेप्र

च्छिद्य द्वयोर्मूलंत्रीणिचोत्तरतःक्षिपेत् । ततः सपवित्रहस्तेनप्रणीतोदकंत्रिःप्रोक्षणीपात्रेनिक्षिप्य अनामिकाङ्गुष्ठाभ्यामुत्तराग्रेपवित्रेगृहीत्वा त्रिरुत्पवनम् । प्रोक्षणीपात्रस्यसव्यहस्तेकरणम् । अनामिकाङ्गुष्ठाभ्यांपवित्रेगृहीत्वा त्रिरुद्दिंगनम् ॥ ततः प्रणीतोदकेनप्रोक्षणीप्रोक्षणम् । प्रोक्षणीजलेन आज्यस्थाल्यादीनिपूर्णपात्रपर्यंतानिक्रमेणैकैकशःप्रोक्ष्य असंचरोप्रणीताग्न्योरंतरालेप्रोक्षणीपात्रंनिधाय आसादितमाज्यं पश्चादग्नेर्निहितायामाज्यस्थाल्यां प्रक्षिप्य । चरुस्थाल्यांप्रणीतोदकमासिच्य । आसादितांस्तंडुलान्प्रक्षिप्य । तत्राज्यंब्रह्माधिश्रयति । तदुत्तरतःस्वयंचरुमेवयुगपदग्नावारोप्य ईषच्छृतेचरौज्वलदुल्मुकंप्रदक्षिणं आज्यचर्वोः समंताद्भ्रामयेत् । ततो दक्षिणपाणिनास्रुवमादाय अधोमुखमग्नौतापयित्वा सव्यपाणौकृत्वा दक्षिणेनसम्मार्जनाग्रैर्मूलतोग्रपर्यंतं मूलैरग्रमारभ्य अधस्तान्मूलपर्यंतंसंमृज्य प्रणीतोदकेनाभिषिच्य पुनः प्रताप्य दक्षिणतोनिदध्यात् । ततः आज्यमुत्थाप्य चरोःपूर्वेणनीत्वाऽग्नेरुत्तरतःस्थापयित्वा चरुमुत्थाप्य आज्यस्यपश्चिमतोनीत्वाज्यस्योत्तरतःस्थापयित्वा आज्यमग्नेःपश्चादानीय चरुंचानीय आज्यस्योत्तरतो निदध्यात् । ततः पूर्ववत्पवित्राभ्यामाज्यमुत्पूय अवलोक्य तस्मादपद्रव्यनिरसनं पुनःप्रोक्षण्युत्पवनम् ।

तत उपयमनकुशानादाय उत्तिष्ठन्प्रजापतिंमनसाध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधस्तिस्र प्रक्षिपेत् । ततः उपविश्य प्रोक्षण्युदकेनसपवित्रेणाग्निमीशानादिउदक्पर्यंतंपरिषिच्य दक्षिणजान्वाच्य ब्रह्मणान्वारब्ध यजमानेनान्वारब्धश्च समिद्धतमेग्नौस्रुवेणाज्याहुतीर्जुहुयात् । तत्राघारावाज्यभागौ च हुत्वा अनन्तरं स्रुवावस्थितहुतशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेप ॥ अथहोमे ॥ अग्नेरुत्तरभागे ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ॥ अग्नेर्दक्षिणभागे ॐ इंद्राय स्वाहा । इदमिंद्राय न मम । इत्याघारौ ॥ मध्ये समिद्धतमे ॐ अग्नये स्वाहा । इदमग्नये न मम ॥ ॐ सोमाय स्वाहा । इद सोमाय न मम ॥ इत्याज्यभागौ । अथाचार्योऽग्निंसंपूज्य नवग्रहहोमकुर्यात् । तत्रादौ नवग्रहाणांसमिध । अर्कं पलाशखदिरावपामार्गोऽथ पिप्पल ॥ उदुंबर-शमीदूर्वा कुशाश्चसमिध क्रमात् ॥ १ ॥ तिलाज्यचरुपक्वचहविर्मुख्यंप्रकीर्तितम् ॥ ततो दधिक्षीरघृताक्ता चरुशाकल्यसहिताकदिसमिध सूर्यादिभ्यस्तत्तन्मंत्रान्ते प्रत्येकमष्टाष्टसंख्यया जुहुयात् । तत्रक्रम ॥ ॐ गणानान्त्वागणपतिंठं हवामहेप्रियाणान्त्वाप्रियपतिंठं हवामहेनिधीनान्त्वानिधिपतिंठं हवामहेवसोमम॥आहमजानिगर्भधमात्वमजासिगर्भधम् स्वाहा इदंगणपतयेनमम एवं सर्वत्र ॥१॥ अर्कस् ।

ॐ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन्न
स्वाहा। इदंसूर्य्याय ॥ १ ॥ पलाशम् । ॐ इमंदेवाऽअसपत्नꣳसुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजानं
राज्ज्यायेंद्रस्येंद्रियाय ॥ इममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकंब्राह्मणानाꣳराजा
स्वाहा। इदं चंद्रमसे ॥ २ ॥ खदिरम् ॥ ॐ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳ
सिजिन्वति स्वाहा।इदं भौमाय ॥ ३ ॥ अपामार्गम् । ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथाम
यंच ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत स्वाहा। इदं बुधाय ॥ ४ ॥ अश्वत्थम् ।
ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासुद्रविणंधे
हिचित्रꣳ स्वाहा।इदं गुरवे॥५॥उदुंबरम्। ॐ अन्नात्परिस्रुतोरसंब्रह्मणाव्यपिबत्क्षत्रंपयꣳसोमम्प्रजापतिः॥ऋतेे
नंसत्यमिंद्रियंविपानꣳशुक्रमन्धसऽइंद्रस्येन्द्रियमिदंपयोमृतंमधुस्वाहा।इति शुक्राय ॥६॥शमीम्ॐ शन्नोदेवी

रभीष्टयऽआपोभवन्तुपीतये॥शंय्योरभिस्रवन्तुनः स्वाहा इदं शनैश्चराय ॥७॥ दूर्वाम् । ॐ कयानश्चित्रऽआभुव
दूतीसदावृधः सखा ॥ कयाशचिष्ठयावृता स्वाहा॥इदं राहवे॥८॥दर्भम् । ॐ केतुङ्कुण्वन्नकेतवेपेशोमर्य्याऽअपे
शसे॥समुषद्भिरजायथाः स्वाहा॥इदंकेतवे ॥९॥ इति नवग्रहाणां होम ॥ततो हस्तेजलमादाय अनेनसमिधादि
कृतेनहोमेन सूर्यादयोग्रहाः प्रीयन्तां नममेत्युत्सृजेत् ॥ अथाधिदेवताप्रत्यधिदेवतानां होम । ईश्वरादिभ्य
पालाश्य समिधस्तैरेवद्रव्यै सह चतुश्चतु सख्यकाभिराहुतिभिर्जुहुयात् । ॐ त्र्यंबकयजामहेसुगन्धिम्पुष्टि
वर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् स्वाहा । इदमीश्वराय ॥ १ ॥ ॐ श्रीश्चतेलक्ष्मीश्च
पत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण स्वाहा
इदमुमायै ॥ २ ॥ ॐ यदक्रन्दः प्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽ
उपस्तुत्यंमहिजातन्तेऽअर्वन्स्वाहा । इदं स्कंदाय ॥ ३ ॥ ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः
स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा स्वाहा इदं विष्णवे ॥ ४ ॥ ॐ ब्रह्मयज्ञानंप्रथमपुरस्ता

द्विसीमतः सुरुचो वेनऽआवः॥सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवं॑ स्वाहा इदं ब्रह्मणे ॥५॥
ॐ सुयो षांऽइन्दुसगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहि
विश्वतोनः स्वाहा । इदमिंद्राय ॥ ६ ॥ ॐ यमायत्वांगिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मः
पित्रे स्वाहा।इदं यमाय ॥ ७ ॥ ॐ कार्षिरसिसमुद्रस्यत्त्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधी
भिरोषधीः स्वाहा । इदं कालाय ॥ ८ ॥ ॐ चित्रावसोस्वस्तितेपारमशीय स्वाहा।इदं चित्रगुप्ताय ॥ ९ ॥
अनेन सघृततिलयवचरुसमिद्धोमेन ईश्वराधिदेवताःप्रीयन्तां नममेतिजलमुत्सृजेत् ॥ यथावाणप्रहारा
णामितियजमानमूर्द्धाभिषेकः ॥ अथप्रत्यधिदेवताहोमः ॥ ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ २॥
ऽआसादयादिह स्वाहा।इदमग्नये ॥ १ ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १॥
योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजि
न्वथ ॥ आपोजनयथाचनः स्वाहा ॥ ३ ॥ इदमद्भ्यः ॥ २ ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छा

॥ ३ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा ७ सुरे
नुः शर्मसप्रथाः स्वाहा इदं पृथिव्यै ॥ ३ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपा ७ सुरे
स्वाहा।इदं विष्णवे ॥ ४ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रठं हवेहवेसुहवठं शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पु
रुहुतमिन्द्रठं स्वस्तिनोमघवाधात्विन्द्र स्वाहा इदमिंद्राय ॥ ५ ॥ ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः
पूषासिघर्म्मायदीष्वस्वाहा इदमिंद्राण्यै ॥ ६ ॥ ॐ प्रजापतेनत्वदेतान्यन्यो विश्वारूपाणिपरिताबभूव ॥
यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयठं स्यामपतयोरयीणाम् स्वाहा । इदं प्रजापतये ॥ ७ ॥ ॐ नमोस्तुसर्पे
भ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः स्वाहा।इदं सर्पेभ्य ॥ ८ ॥ ॐ ब्रह्मयज्ञान
म्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः स्वा
हा इदं ब्रह्मणे ॥ ९ ॥ अनेनसमिधादिकृतेनहोमेन अग्न्यादिप्रत्यधिदेवता प्रीयतां नमम इत्युत्सृ
जेत् ॥ अथ पंचलोकपालदेवताहोम ॥ विनायकादिपंचलोकपालेभ्य इंद्रादिदशदिक्पालेभ्यश्च प्रत्येकं पूर्वो
क्तद्रव्येण द्वे द्वे आहुती जुहुयात् ॥ ॐ गणानान्त्वागणपतिठं हवामहेप्रियाणान्त्वाप्रियपतिठं हवामहेनि

धीनान्त्वानिधिपतिंᳲहवामहेवसोममं ॥ आहमंजानिगर्भधमात्वमंजासिगर्भधम् स्वाहा । इदं गणप
तये ॥ १ ॥ ॐ अंबेऽअंबिकेऽम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीᳲ
स्वाहा । इदं दुर्गायै ॥ २ ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरᳲ सहस्त्रिणीभिरुपयाहियज्ञम् ॥ वायोऽ
अस्मिन्त्स्ववंनेमादयस्वयूयम्पातस्वस्तिभिःसदानः स्वाहा । इदं वायवे ॥ ३ ॥ ॐ घृतंघृतपावानःपिबतव
साम्वसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ।
इदमाकाशाय ॥ ४ ॥ ॐ यावाङ्कशामधुमत्याश्विनासुनृतावती ॥ तयायज्ञम्मिमिक्षताम् स्वाहा । इद
मश्विभ्याम् ॥ ५॥ अनेनहोमेनपंचलोकपालदेवताःप्रीयंतांनमम तिजलमुत्सृजेत् ॥ यथावाणप्रहाराणामिति
यजमानमूर्द्धाभिषेकः ॥ ॥ अथ दशदिक्पालहोमः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रᳲ हवेहवेसुहवᳲ
शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳲस्वस्तिनोमघवाधात्विन्द्रः स्वाहा । इदमिन्द्राय ॥ १ ॥
ॐ त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषᳲरक्षमाण

स्तवंव्रुते स्वाहा ॥ इदमग्नये ॥ २ ॥ ॐ यमायत्वांगिरस्वतेपितुमतेस्वाहा ॥ स्वाहा
घर्मायस्वाहाघर्म्मःपित्रेस्वाहा । इद यमाय ॥ ३ ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्वि
हितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तुस्वाहा इद निर्ऋतये ॥ ४ ॥ ॐ तत्त्वा
यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहवोध्युरुशंठसमानऽआयुःप्रमोषीः
स्वाहा।इदं वरुणाय ॥ ५ ॥ ॐ आनोनियुद्भिः शतिनीभिरध्वरठं सहस्त्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मि
न्त्सवनेमादयस्वययम्पातस्वस्तिभिःसदानःस्वाहा । इदं वायवे ॥ ६ ॥ ॐ वयठं सोमव्रुतेतवमनस्तनूषुवि
भ्रतः।प्रजावन्तःसचेमहि स्वाहा।इद कुबेराय॥७॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिंधियञ्जिन्वमवसेहूमहेवय
म॥ पुपानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये स्वाहा । इदमीशानाय ॥ ८ ॥ ॐ अस्मेरुद्रामेहना
पर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशठंसतेस्तुवतेधायिपज्रऽइन्द्रज्येष्ठाऽअस्माँऽअवन्तुदेवा स्वाहा।इदं

ब्रह्मणे ॥ ९ ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः स्वाहा। इदमनंताय ॥ १० ॥
अनेनहोमेन इंद्रादयोदिक्पालदेवताःप्रीयंतां नममेतिजलमुत्सृजेत् ॥ इति दिक्पालहोमः ॥ अथ पितामहा
दिदेवानां होमः ॥ ॐ ब्रह्मयज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोवेनऽआवःसबुध्न्याऽउपमाऽअस्यविष्ठाः सतः
श्चयोनिमसतश्चविवंः स्वाहा इदं ब्रह्मणे ॥ १ ॥ ॐ त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धं
नान्मृत्योर्मुक्षीयमामृतात् स्वाहा। इदं शिवाय ॥ २ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्य
पांसुरेस्वाहा । इदं विष्णवे ॥ ३ ॥ ॐ गणानांत्वा० स्वाहा। इदं गणपतये ॥ ४ ॥ ॐ श्रीश्चतेलक्ष्मीश्च०
स्वाहा। इदं लक्ष्म्यै ॥ ५ ॥ ॐ पावकानःसरस्वती० स्वाहा। इदं सरस्वत्यै ॥ ६ ॥ ॐ अंबेऽअंबिकेऽम्बालिकेन
मानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकांकाम्पीलवासिनीं स्वाहा। इदं दुर्गायै ॥ ७ ॥ ॐ नहिस्पशमविं
दन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरंक्षैत्रजित्यायदेवाः स्वाहा इदं
क्षेत्रपालाय ॥ ८ ॥ ॐ भु तायत्वानारातयेस्वरभिविख्येषन्दृंह हंतांदुर्याः पृथिव्यामुर्वन्तारिक्षमन्वेमिपृथिव्या

स्त्वानाभैंसादयाम्यदित्याऽउपस्त्येभैहव्यर्ठ रक्ष स्वाहा इदं भूतेभ्ये ॥ ९ ॥ ॐ वास्तोष्पतेप्रतिजानिह्य स्मान्त्स्वावेशोऽअनमीवोमवान॥ यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्पदेस्वाहा । इदं वास्तोष्पतये ॥१०॥ ॐ विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम्॥तस्मैविशःसमनमन्तपूर्वीरयमुग्रोविहव्योयथासत् स्वाहा। इदं विश्वकर्मणे ॥ ११ ॥ तत सर्वतोभद्रादिमडलस्थापितदेवेभ्य प्रत्येकंतिलयवपायसाज्यद्रव्येणहोमंकृत्वा तिलाज्यपायसेनप्रधानदेवतायै अष्टोत्तरशतमष्टाविंशतिसंख्यया वा जुहुयात् । ततोदेशकालौसंकीर्त्य । अद्यामुकशांत्याख्यकृतस्यकर्मण सांगतासिद्ध्यर्थं स्थापितदेवतानां मृडाभिश्चोत्तर पूजन करिष्ये । इति संकल्प्य । ॐ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ १ ॥ ॐ मृडामयेनम । इति मंत्रेण गंधादिपचोपचारैः संपूज्य । स्थापितदेवतानामुत्तरपूजनं कुर्यात् । ॐ भूर्भुव स्व सूर्यादिस्थापितदेवताभ्यो नम इति गंधादिपंचोपचारै सपूज्य । अनयापूजयामृडाभि स्थापितदेवताश्च प्रीयन्तामित्युत्सृजेत् ॥ ततो हुतशेषहवि

द्रव्यंगृहीत्वाब्रह्मणान्वारब्धः स्विष्टकृद्धोमंकुर्यात्। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम॥
ततोभूराद्या नवाज्याहुतयः॥ ॐ भूः स्वाहा इदमग्नये न मम॥ १॥ ॐ भुवःस्वाहा इदं वायवे न मम॥ २॥
ॐ स्वः स्वाहा इदं सूर्याय न मम॥ ३॥ ॐ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥
यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा॥ इदमग्नीवरुणाभ्याम्॥ ४॥ ॐ
सत्त्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ॥अवयक्ष्वनोवरुणᳬरराणोवीहिमृडीकᳬसुहवोनऽएधि
स्वाहा। इदमग्नीवरुणाभ्याम्॥ ५॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि॥ अयानोयज्ञंव
हास्ययानोधेहिभेषजᳬ स्वाहा। इदमग्नये न मम॥ ६॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाःपाशावितताम
हान्तः। तेभिर्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काःस्वाहा। इदं वरुणायसवित्रेविष्णवेविश्वेभ्यो
देवेभ्योमरुद्भ्यःस्वर्केभ्यश्च न मम॥ ७॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमᳬश्रथाय॥ अथावु
यमादित्यव्रतेतवानागसोऽअदितयेस्याम स्वाहा। इदंवरुणायादित्यायादितयेच न मम॥ ८॥ ॐ

प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ९ ॥ इति नवाहुतय ॥ अथ बलिदानम् । तच्चैवम् अग्न्यायतनस्यसमंताद्दिक्षुविदिक्षु च । दशदिक्पालानां माषभक्तबलयो देया । अद्यपूर्वंकृतस्यकर्मण सांगतासिद्ध्यर्थं दिक्पालपूर्वकं आदित्यादिग्रहमंडलस्थापितदेवताभ्यो बलिदानकरिष्ये ॥ इति सक ल्पयेत् ॥ पूर्वे । ॐ त्रातारमिन्द्रं० ॥ १ ॥ इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि । भोइन्द्र दिश रक्ष बलिंभक्ष ममसकुटुंबस्याभ्युदयकुरु । आयु कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदोभव । अनेनबलिदानेन इंद्र प्रीयताम् ॥ एव सर्वत्र ॥ १ ॥ आग्नेय्यांदिशि । ॐ त्वन्नोऽअग्नेतवदेव० । अग्नये सांगाय सपरिवाराय० भोअग्ने दिशंरक्ष बलिंभक्ष० आयु कर्ता० अनेनबलिदानेन अग्नि प्रीयताम् ॥ २ ॥ दक्षिणस्याम् ॥ ॐ यमायत्वांगि० यमाय सांगाय० भोयम दिश० आयु कर्ता० अनेनबलिदानेनयम प्रीयताम् ॥ ३ ॥ नैर्ऋ त्याम् । ॐ असुन्वन्तमयजमानमिच्छ० । निर्ऋतयेसांगाय० भोनिर्ऋतेदि०अनेनबलि० निर्ऋति प्रीय ताम् ॥ ४ ॥ पश्चिमे । ॐ तत्त्वायामि० वरुणाय सांगाय० भोवरुण० आयु कर्ता० अनेनबलि० वरुण प्रीय

भोवायोदिशं० अनेनबलिदा० वायुःप्रीयताम् ॥ ६ ॥ आनोंतियु० वायवे सांगाय०
ताम् ॥ ५ ॥ वायव्यां० आनोंतियु० वायवे सांगाय० भोकुबेर० अनेन० सोमःप्रीयताम् ॥ ७ ॥ ईशान्याम् ॥ ॐ तमी
ॐ उत्तरे । ॐ वयर्ठ सोमव्र० कुबेराय० भोकुबेर० अनेन० सोमःप्रीयताम् ॥ ८ ॥ पूर्वेशानयोर्मध्ये ॐ
शांनुं० ईश्वरायसांगाय० भोईश्वर दिशं० अनेनबलिदानेनईश्वरः प्रीयताम् ॥ ८ ॥ पूर्वेशानयोर्मध्ये ॐ
अस्मेरुद्रा० ब्रह्मणे सांगाय० भोब्रह्मन्० आयुःक० अनेनबलि० ब्रह्माप्रीयताम् ॥ ९ ॥ निर्ऋतिपश्चिमयोर्म
ध्ये० । ॐ स्योनापृथिविनो० ॐ अनंतायसांगाय० भोअनंतादिशं० आयुःकर्ता० अनेनबलिदानेनअनंतः
प्रीयताम् ॥ १० ॥ ततो ग्रहवेदीसमीपेग्रहाणांबलयः ॥ ॐ आकृष्णेन० सूर्यायसांगाय० ईश्वराग्निरूपाधिप्र
त्यधिदेवतासहिताय इमंसदीपमाषभक्तबलिंसमर्पयामि । भोसूर्यइमंबलिंगृहाणममसकुटुंबस्याभ्युदयंकुरु
आयुः कर्ता० अनेनबलिदानेनसूर्यःप्रीयताम् ॥ १ ॥ ॐ इमंदेवा० ॐ सोमायसांगाय० उमांबुरूपाधिप्रत्य
धिदेवतासहिताय० भोसोम इमंबलिं० ॥ २ ॥ ॐ अग्निर्मूर्द्धा० ॐ भौमायसां० स्कंदभूमिरूपाधिप्रत्यधिदे
वतासहिताय० भोभौम इमंबलिंगृ० ॥ ३ ॥ ॐ उद्बुध्यस्वा० बुधायसां० नारायणविष्णुरूपाधिप्रत्यधिदेव

ब्रह्मेंद्ररूपाधिप्रत्यधिदेवता
तासहिताय॰ इममाप॰ भोबुधइम॰ ॥ ४ ॥ ॐ बृहस्पते॰ बृहस्पतयेसांगाय॰ इंद्रेन्द्राणीरूपाधिप्रत्यधि
सहिताय॰ भोबृहस्पतेइमं॰ अनेनवलिं॰ ॥ ५ ॥ ॐ अन्नात्परि॰ शुक्रायसांगाय॰ यमप्रजापतिरूपाधिप्रत्यधिदे
देवतासहिताय॰ भो शुक्रइमंवलिं॰ ॥ ६ ॥ ॐ शन्नो देवी॰ शनैश्चराय सां॰ कालसर्परूपाधिप्रत्यधिदे
वतासहिताय॰ भोशनैश्चर इमंवलिं॰ ॥ ७ ॥ ॐ कयानश्चित्र॰ । राहवेसांगाय॰ केतवेसांगाय॰
वतासहिताय॰ भोराहो इमंवलिं॰ अनेनवलिदानेनराहु प्रीयताम् ॥ ८ ॥ ॐ केतुकृण्वन्न॰ ततः पंचलोकपाले
चित्रगुप्तब्रह्मरूपाधिप्रत्यधिदेवतासहिताय॰ भोकेतो इमवलिं॰ अनेन॰ केतु प्रीयताम्॥९॥ दुर्गा
भ्योवलि । ॐ गुणानांन्त्वा॰ गणपतयेसांगाय॰ भोगणपते॰ इमवलिं॰ ॥ १ ॥ ॐ अम्बेऽअंबिके॰ । ॐ
ये॰ सांगाये॰ भोदुर्गे इमं॰ ॥ २ ॥ ॐ आनोनियुद्भिः॰ । वायवेसांगाय॰ भोवायो॰ इम॰ ॥ ३ ॥ भो अ
घृतघृत॰ आकाशाय॰ भोआकाशइम॰ ॥ ४ ॥ ॐ यावांकशा॰ । अश्विभ्यांसांगाभ्यां॰ इमवलिं॰
श्विनो॰ ॥ ५ ॥ ॐ वास्तोष्पते॰ वास्तोष्पतयेसांगाय॰ भोवास्तो॰ ॥ ६ ॥ ततोमातृणामेकमेववलिंदद्यात् ।
ॐ समख्येदेव्याधियासन्दक्षिणयोरुचक्षसा ॥ मामऽआयुष्प्रमोषीर्मोऽअहन्तववीरम्विदेयतवदेविसन्दृशि

गौर्य्यादिमातृभ्यइमंसदीपमाषभक्तबलिं० भोभोगौर्यादिमातरइमंबलिंगृह्णीत आयुःकर्त्र्यःक्षेमकर्त्र्यः० अने
नबलि० गौर्यादिमातरःप्रीयंताम् ॥ ततः प्रधानदेवताभ्योबलिंदत्त्वा क्षेत्रपालाय महाबलिंदद्यात् ॥ अथ क्षेत्र
पालबलिः ॥ एकस्मिन्वंशपात्रे कुशानास्तीर्य तदुपरि आहारचतुर्गुणंद्विगुणंवामाषभक्तदध्योदनं जल
पात्रं च निधाय हरिद्राकुंकुमसिंदूरकज्जलद्रव्यपताकादीपयुतंकृत्वा । अद्येत्यादि० सकलारिष्टशांतिपूर्वकं
प्रारिप्सितस्यकर्मणः सांगतासिद्ध्यर्थं क्षेत्रपालपूजनं बलिदानं च करिष्ये । इतिसंकल्प्य । ॐनहिस्पशमवि
दन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः॥एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरंक्षैत्रजित्यायदेवाः १ ॐक्षेत्रपाला
यनमः।इति मंत्रेणषोडशोपचारैःसंपूज्यप्रार्थयेत्॥ॐनमोक्षेत्रपालस्त्वंभूतप्रेतगणैःसह । पूजांबलिंगृहाणेमंसौ
म्योभवतुसर्वदा॥आयुरारोग्यंमेदेहिनिर्विघ्नंकुरुसर्वदा॥१॥अनेनपूजनेनक्षेत्रपालःप्रीयताम्॥ततो बलिदानम् ॥
ॐ क्षेत्रपालमहाबाहोमहाबलपराक्रम ॥ क्षेत्राणांरक्षणार्थायबलिंगृह्णनमोस्तुते ॥ १ ॥ क्षेत्रपालाय सांगाय
भूतप्रेतपिशाचशाकिनीडाकिनीवेतालादिपरिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीपदधि
माषभक्तबलिं समर्पयामि । भोभोःक्षेत्रपाल सर्वतोदिशंरक्षबलिंभक्ष ममसकुटुंबस्याभ्युदयंकुरु आयुःकर्ता

क्षेमकर्तीशांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव ॥ अनेनबलिदानेनक्षेत्रपाल प्रीयताम् ॥ इमं बलिंअनवेक्ष्यमाणेनशुद्रोब्राह्मणेननीत्वा चतुष्पथेनि क्षिपेत्।यजमानोपिस्नात्वापृष्ठतोद्वारपर्यंतंगत्वाजलंक्षिपेत्। इति क्षेत्रपालबलि ॥ अथ भूतेभ्यस्तत्रैवबलिदानम् ॥ शूर्पमध्येपिष्टमयदीपमाषान्नदध्योदनहरिद्रासिंदूरक ज्जलगधरक्तपुष्पाणिसंस्थाप्य गीतवादित्रकुडुवजनसहितश्चत्वरेगत्वा तत्र गंधपुष्पाद्यर्चितंशूर्पंस्थापयेदेभि र्मंत्रै ॥ ॐ बलिंगृह्णंतुतेदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्विनौरुद्रा सुपर्णा पन्नगाग्रहा ॥ १ ॥ जृंभका सिद्धगंधर्वामालाविद्याधरानगा ॥ असुरायातुधानाश्चपिशाचाडाकिनीगणा ॥ २ ॥ शक्तयोयक्षवेतालायेच विघ्नविनायका ॥ जगतांशांतिकर्तार क्रमाढ्याश्चैवमातर ॥ ३ ॥ माविघ्नमाचमेरोगोमासंतुपरिपंथिन ॥ सौम्याभवंतुतृप्ताश्चभूता प्रेता सुखावहा ॥ ४ ॥ तेसर्वेतृप्तिमायांतुरक्षांकुर्वंतुमेऽध्वरे ॥ देवताभ्य पितृभ्यश्चभू तेभ्य सहजंतुभि ॥ ५ ॥ एतत्स्थानाधिवासिभ्य प्रयच्छामिबलिंनम ॥ त्रैलोक्येयानिभूतानिस्थावराणि चराणिच ॥ ६ ॥ ब्रह्माविष्णुशिवै सार्द्धंरक्षांकुर्वंतुतानिमे ॥ देवदानवगंधर्वायक्षराक्षसपन्नगा ॥ ७ ॥ ऋष योमुनयोगावोदेवमातरएवच ॥ एतेममाध्वरेरक्षांकुर्वंतुप्रमुदान्विता ॥ ८ ॥ एतेभ्योभूतेभ्योगंधादिकंब

पादंप्रक्षाल्याचमनंकुर्यात् ॥ इति बलिदानप्रकारः ॥ अथ पूर्णा
स्वाहा । इति बलिं दत्त्वा गृहे आगत्यपाणिपादंप्रक्षाल्याचमनंकुर्यात् ॥ इति बलिदानप्रकारः ॥ अथ पूर्णाहुतिहोमंकरिष्ये ।
हुतिहोमः ॥ अद्येत्यादिपठित्वा । कृतस्यकर्मणःसांगतासिद्ध्यर्थं वसोर्द्धारासमन्वितं पूर्णाहुतिहोमंकरिष्ये ।
इति संकल्प्य । यजमानःसपत्नीकोगुरोर्दक्षिणस्कंधंस्पृशंस्तांबूलपूगीफलाक्षतघृतंस्रुवेकृत्वाजुहुयात् । तत्र
मंत्राः ॥ ॐ समुद्रादूर्म्मिर्मधुमाँ२ऽउदारदुपाᳪंशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवा
नाममृतस्यनाभिः ॥ १ ॥ वयन्नामप्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमा
नञ्चतुःशृंगोवमीद्गौरऽएतत् ॥ २ ॥ चत्वारिशृंगात्रयोऽअस्यपादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृ
षभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ३ ॥ त्रिधाहितम्पणिभिर्गुह्यमानंगविदेवासोघृतमन्वविन्दन् ॥
इन्द्रऽएकᳪंसूर्यऽएकंजजानवेनादेकᳪंस्वधयानिष्टतक्षुः ॥ ४ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपु
णानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ५ ॥ सम्यक्स्रवन्तिसरितोन
धेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ६ ॥ सिन्धोरिव

प्राद्धनेशूघनासोषार्तप्रमियस्पतयन्तिजिह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिःपिन्व
मानः ॥ ७ ॥ अभिप्रवन्तसमनेवयोषाःकल्याण्यःस्मयमानासोऽअग्निम् ॥ घृतस्यधाराःसमिधोनसन्तताजु
षाणोहर्यतिजातवेदाः ॥ ८ ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्र
यज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९ ॥ अभ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नय
तदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ १० ॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तःसमुद्रेहृद्यन्तरायुषि ॥ अपा
मनीकेसमिथेयऽआभृतस्तमश्यामम्मधुमन्तन्तऽऊर्म्मिम् ॥ ११ ॥ पुनस्त्वादित्यारुद्रावसवःसमिन्धताम्पुनर्ब्र
ह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वंवर्धयस्वसत्याःसन्तुयजमानस्यकामाः ॥ १२ ॥ सप्ततेऽअग्नेसमिधःस
प्तजिह्वाःसप्तऽऋषयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ १३ ॥
पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जंशतक्रतोस्वाहा ॥ १४ ॥ इदमग्न

ये वैश्वानरायवसुरुद्रादित्येभ्यःशतक्रतवेसप्तवतेअग्नयेअद्भ्यश्च न मम॥ततो वसोर्द्धारांजुहुयात् ॥ तत्र मंत्राः ॥
ॐ सप्ततेऽअग्नेसमिधः सप्तजिह्वाःसप्तऽऋषयःसप्तधामंप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्तिसप्त
योनीरापृणस्वघृतेनस्वाहा ॥ १ ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्यज्योतिश्चज्योतिष्मांश्च॥शुक्रश्चऽऋतुपा
श्चात्यंहाः ॥ २ ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ ३ ॥
ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥ ४ ॥ ऋतजिच्चसत्यजिच्चसेनजिच्च
सुषेणश्च ॥ अंतिमित्रश्चदूरेऽअमित्रश्चगणः ॥ ५ ॥ ईदृक्षासऽएतादृक्षासऽऊषुणःसदृक्षासः प्रतिसदृक्षासऽ
एतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ ६ ॥ स्वतवांश्चप्रघासीचसान्तपनश्च
गृहमेधीच ॥ क्रीडीचशाकीचोज्जेषी ॥ ७ ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनु
वर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ ८ ॥ इमंस्तनमूर्ज्जस्वन्तन्ध
यापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्संजुषस्वमधुमन्तमर्वन्त्समुद्रियंसदनमाविशस्व ॥ ९ ॥ घृतम्मिमिक्षे

घृतमस्य स्वाहा ॥ १० ॥ इति पूर्णाहुतिहोम ॥ ततस्त्र्यायुषकरणम् ॥ श्रद्धांमेधांयशःप्रज्ञाविद्यांपुष्टिंश्रि
यंवलम् ॥ तेजआयुष्यमारोग्यंदेहिमेहव्यवाहन ॥ १ ॥ ॐ त्र्यायुषञ्जमदग्नेरिति ललाटे । कश्यपस्यत्र्यायु
षमिति ग्रीवायाम् ॥ यद्देवेषुत्र्यायुषमितिदक्षिणांसे । तन्नोऽअस्तुत्र्यायुषमिति हृदि ॥ तत संस्रवप्राशनम् ॥
पवित्राभ्यांमार्जनम् । अग्नौपवित्रप्रतिपत्ति ॥ ब्रह्मणेपूर्णपात्रदानम् । तद्यथा । अद्येत्यादिपठित्वा । अद्य
कृतैतदमुकशांत्याख्यकर्मणिहोमकर्मप्रतिष्ठार्थमिदंपूर्णपात्रंप्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणा
यब्रह्मणेतुभ्यमहंसंप्रददे । ॐ स्वस्तीति प्रतिवचनम्॥ततोब्रह्मग्रंथिविमोक । तत प्रणीतोदकेन । ॐ सुमित्रि
यानऽआपऽओषधय सन्त्विति । ॐ आप शिवा शिवतमा शान्ता शान्ततमास्तास्तेकृण्वन्तुभेषजमितिच ।
यजमानमूर्धानमभिषिंचति । तत । ॐ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियंचवयंद्विष्मइति ईशान्यांप्र
णीतान्युब्जीकुर्यात् । तत आस्तरणक्रमेणबर्हिरुत्थाप्याज्येनाभिघार्य ॐ देवागातुविदोगातुंवित्वागातुमि
त ॥ मनसस्पतइमंदेवयज्ञꣳ स्वाहावातेधाःस्वाहा । इति मन्त्रेणहस्तेनैवजुहुयात् ॥ ततोग्रहकलशदेवताक
लशानामुदकमेकस्मिन्पात्रेएकीकृत्यदूर्वापंचपल्लवैरुदङ्मुखआचार्यस्तिष्ठन्चत्वारऋत्विजश्चसपत्नीकंयज

लशानाकुर ...

मानंप्राङ्मुखमुपविष्टमभिषिंचेयुः । तत्र मंत्राः । ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच
क्षसे ॥ १ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥ तस्माऽअरङ्गमामवोयस्यक्ष
यायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि
शक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ४ ॥ ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थो
वरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ५ ॥ भगप्प्रणेतर्भगसत्यरा
धोभगेमान्धियमुदवाददन्नः ॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तःस्याम ॥ ६ ॥ इदमापःप्रवहताव
द्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ ७ ॥
पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ८ ॥ आप्यायस्वसमेतुतेवि
श्वतःसोमवृष्ण्यम् । भवावाजस्यसङ्गथे ॥ ९ ॥ पयःपृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयः

... भिर्यजमानः स्वासनेउपविश्य आचम्य आज्या

देवस्यत्वासवितुप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचो
स्वती॰ प्रदिशः—सन्तुमह्यम् ॥ १० ॥ देवस्यत्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णो
यन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्ज्येनाभिषिञ्चामि ॥ ११ ॥ देवस्यत्वासवितुः प्रसवेऽश्वि
हस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रेणाग्नेःसाम्राज्ज्येनाभिषिञ्चामि ॥१२॥ देवस्यत्वासवितुः प्रसवेऽश्वि
नोर्बाहुभ्यांपूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामि ॥ सरस्वत्यैभैषज्येनवी
र्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियेयशसेभिषिञ्चामि।१३॥पालाशम्भवतितेनब्राह्मणोभिषिञ्च
तिब्रह्मवैपालाशोब्रह्मणैवेनमेतदभिषिञ्चति॥१४॥ सर्वेपात्राऽएषवेदानाऽ रसोयत्सामसर्वेषामेवेनमेतद्वेदाना
रसेनाभिषिञ्चति ॥ १५ ॥ यद्देवकुल्पाञ्जुहोतिप्राणावैकुल्पाऽअमृतमुपवैप्राणाऽअमृतेनैवेनमेतदभिषिञ्चति ॥
॥ १६ ॥ दीर्घायुत्वायबलायवर्चसेसुप्रजास्त्वायसहसाऽअथोजीवशरदः शतम् ॥ १७ ॥ द्यौःशान्तिरन्तरि
क्षꣳ शान्तिः—पृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः—॥ वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वꣳ

शान्तिशान्तिरेवशान्तिःसामाशान्तिरेधि ॥१८॥ अथ पौराणिका मंत्राः॥सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्व
राः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवा
न्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतु
तेसदा ॥ ३ ॥ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशान्तिस्तुष्टिःकांतिस्तुमा
तरः ॥ ४ ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः॥आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ५ ॥ ग्रहा
स्त्वामभिषिंचंतुराहुःकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ६ ॥ ऋषयोमुनयोगावोदेव
मातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ ७ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥
औषधानिचरत्नानिकालस्यावयवाश्चये ॥ ८ ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभि
षिंचंतुसर्वकामार्थसिद्धये ॥ ९ ॥ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ अभिषिंचंतुतेसर्वेधर्मकामार्थ
सिद्धये ॥ १० ॥ अमृताभिषेकोस्तु ॥ एवमभिषेकानंतरंसर्वौषधीरनुलिप्य शुद्धोदकेनस्नात्वा उभयोः स्नान
वस्त्रत्यागः । शुक्लमाल्यांबरधरो धृतमंगलतिलकः सपत्नीकोयजमानः स्वासनेउपविश्य आचम्य आज्या

१०। कनकुंय ८ । ॐ रूपर्णवोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतचन्द्रदक्षिणाविस्व
पश्यव्यन्तरिक्षंयतस्वसदस्यैः ॥ १ ॥ रूपठं रूपम्प्रतिरूपोबभूवतदस्यरूपम्प्रतिचक्षणाय॥ इन्द्रोमायाभि
पुरुरूपऽएतेयुक्ताह्यस्यहरयश्शतादशोत्ययंवैहरयोयंवेदशचसहस्राणिबहूनिचनन्तातदेतद्ब्रह्मपूर्वमनमवाह्य
जमनुं सर्वानुशासनम् ॥ २ ॥ इत्याज्येमुखमवलोक्यदेशकालौस्मृत्वा ममायुरारोग्यप्राप्तयेसमुवर्ण इदं
आज्यपात्रं आचार्यायतुभ्यमहंसंप्रददे इत्याचार्यायदद्यात् ॥ ततो ब्राह्मणभोजनसंकल्प ॥ कृतस्यकर्मण
सांगतासिद्ध्यर्थं आचार्याय दक्षिणांदद्यात् ॥ ततोऋत्विगादिभ्योयथाशक्तिदक्षिणांदत्वाअन्येभ्योब्राह्मणे
भ्यो यथाशक्तिभूयसींदक्षिणांदातुमहमुत्सृजे इतिदत्त्वा तेषामाशिषोगृह्णीयात ॥ तेच ॐ स्वस्तिनऽइंद्रो
वृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥
ॐ श्रीवर्चस्वमायुष्यमारोग्यमाविधात्पवमानम्महीयते ॥ धान्यंधनंपशुंबहुपुत्रलाभंशतसंवत्सरदीर्घमायुः
॥ २ ॥ पुनस्त्वादित्यारुद्रावसवः समिन्धतान्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वंवर्द्धयस्वसत्याः

संन्तुयजमानस्युकामां॰ ॥ ३ ॥ मंत्रार्थाः सफलाः संतु पूर्णाःसन्तुमनोरथाः ॥ शत्रूणांबुद्धिनाशोस्तुमित्राणा
मुदयस्तव ॥ ४ ॥ इत्याशिषोदद्युः ॥ ततोदेवताग्निविसर्जनम् ॥ यांतुदेवगणाःसर्वेस्वशक्त्यापूजितामया ॥
इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ १ ॥ ॐ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयंन्तुमरुतंःसुदा
नवऽइन्द्रप्राशूर्भवासचा॥२॥उमांतिकेगणपतिर्ब्रह्माण्डेब्रह्मगच्छतु ॥ वैकुंठेभगवान्विष्णुः कैलासेचमहेश्वरः ॥
॥ ३ ॥ लक्ष्मीर्विष्णुसमीपेचकलशश्चैवसागरे ॥ पन्नगायान्तुपातालेकाश्मीरेचसरस्वती ॥ ४ ॥ स्वात्मपीठेषु
योगिन्यःक्षेत्रपालोमहाबलः ॥ वेदाश्चब्रह्मणः पार्श्वेमातरोमातृमण्डले ॥ ५ ॥ रविःकलिंगंयमुनांचचंद्रमा
भौमोह्यवंतींशशिजश्चकौशलाम् ॥ सिंधुंगुरुर्भोजकटंभृगुश्चमंदःसुराष्ट्रंपवनंचराहुः ॥ केतुर्गिरिंशक्रमुखाश्च
देवाःस्वांस्वांपुरींयांतुयथाक्रमेण ॥ ६ ॥ ब्रह्मोद्भूतांनागपतिस्तथाऽधोयाम्यामगस्त्योध्रुवउत्तरांच ॥ सप्त
र्षयोराशिभयोगपक्षगंधर्वयक्षोगिरयोनदाश्च ॥ स्थानानिगच्छंतुयथासमायुर्द्यांशीश्चसंतानसुखंददन्तु ॥ ७ ॥
आवाहितदेवताःस्वस्वस्थानानिगच्छत॥गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ॥यत्रब्रह्मादयोदेवास्तत्रगच्छ
हुताशन ॥१॥ ॐ यज्ञयज्ञंगच्छयज्ञपतिंगच्छस्वांयोनिंगच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्ववीर

स्तञ्जुषस्वस्वाहा २ यज्ञनारायणस्वस्थानेगच्छ ॥ एवंदेवान्विसृज्य यज्ञोपकरणादिक ऋत्विग्भ्योदत्वा गुर्वा
दीन्सपूज्यकरौसंपुटीकृत्य मयायत्कृतं अमुकशांत्याख्ययज्ञं तत्कालहीनं भक्तिहीनं श्रद्धाहीनं द्रव्यहीनं च
भवतां ब्राह्मणानां वचनात् श्रीसूर्याद्यावाहितदेवताप्रसादाच्च सर्वविधे परिपूर्णतास्त्वितिभवन्तोब्रुवन्तु ॥
अस्तुपरिपूर्णता इति ब्राह्मणाब्रूयु ॥ ततो ब्राह्मणशतंपंचाशद्विंशतिं वा शक्त्यनुरूपं भोजयित्वा । ॐ यस्य
स्मृत्याचनामोक्त्यातप पूजाक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतम् ॥ १ ॥ प्रमादात्कुर्वतांकर्म
प्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णो संपूर्णस्यादितिश्रुति ॥ २ ॥ ॐ विष्णवेनमोविष्णवेनमोविष्ण
वेनम ॥ इत्युक्त्वा कुटुंबजनै परिवृत स्वयं भोजनकुर्यात् ॥ एवंय कुरुतेशांतिनारदोक्तप्रमाणत ॥ त
दनिष्टंतुसकलंसद्यएवविनश्यति ॥ १ ॥ श्रीरामकृष्णपौत्रेणकस्तूरीचन्द्रसूनुना ॥ कृताचतुर्थीलालेन
पद्धति-शांतिदायिनी ॥ २ ॥ इति श्रीबीकानेरराज्यान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्ठकुलो
द्भवगौडवंशावतसश्रीरामकृष्णपौत्रेण श्रीकस्तूरीचद्रसूनुना श्रीमहादेवभक्तपंडितश्रीचतुर्थीलाल (चोथमल)
शर्मणा विरचिते शांतिप्रकाशे सर्वशांत्युपयोगिपद्धतिकथनं नाम प्रथमं प्रकरणम् ॥ १ ॥ ॥

अथ द्वितीयं प्रकरणम् ॥ ॥ तत्र तावद्विघ्नपरिहाराय विनायकशांतिरुच्यते ॥ साचोपनयनविवाहादौ निर्वि-
घ्नफलप्राप्त्यर्थमुपसर्गनिरासाय वा सपिंडमरणादिनिमित्तकप्रतिकूलनिवृत्त्यर्थंवा विनायकशांतिः कार्या ।
तत्रकालः । विष्णुधर्मे–हस्तपुष्याश्वयुक्सौम्यवैष्णवेचोत्तरात्रये ॥ नक्षत्रेचमुहूर्तेचमैत्रेवाब्रह्मदैवते ॥ १ ॥
शुक्लपक्षेचतुर्थ्यांचवासरेधिषणस्यच ॥ विघ्नस्यपरिहारार्थंशांतिंकुर्याद्विनायकीम् ॥ २ ॥ अथ प्रयोगः॥ उक्त
शुभदिने कर्तापवित्रपाणिः आचम्य प्राणानायम्य । देशकालौसंकीर्त्य । अमुकगोत्रोत्पन्नोऽमुकशर्माऽहं
विनायकोपसर्गशांत्यर्थममुककर्मणि निर्विघ्नतासिद्ध्यर्थममुकफलसिद्ध्यर्थं वा अमुकदुःस्वप्ननिराशार्थं
लक्ष्मीप्राप्त्यर्थं वा विनायकशांतिं करिष्ये ॥ अथवा । ममाऽमुकस्य कर्तव्यउपनयनेविवाहे वा निश्चयोत्तरं
कस्यचिदमुकसपिंडगोत्रजपुरुषस्यसंजातमृतिजनितप्रतिकूलसकलदोषपरिहारद्वारा वधूवरयोः आयुरभि
वृद्धिपूर्वकसंतत्यविच्छेदसकलभूतिसिद्ध्यर्थश्रीपरमेश्वरप्रीत्यर्थंसनवग्रहमखांविनायकशांतिंकरिष्ये । वा
अस्यकुमारस्य उपनयनकर्मणोनिर्विघ्नतासिद्ध्यर्थं विनायकशांतिं करिष्ये। इति संकल्प्य । तदंगत्वेनगणे
शपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धांतं पूर्ववत्कर्मकृत्वा आचार्यादिवरणं कुर्यात् । अत्र चतुरोऽष्टौ

वा ऋत्विजोवृणुयात्।तत्र चत्वार स्वस्तिवाचका । तत साचार्योयजमानोवामहस्तेगौरसर्षपान्गृहीत्वा रक्षो हणमित्यादिपूर्वोक्तमंत्रै सर्षपान्सर्वत्रविकीर्य । आपोहिष्ठेतितिभिर्मंत्र कर्मभूमिपचगव्येनप्रोक्ष्य । भूर सीतिमन्त्रेण भूमिसपूजयेत्। अथाचार्य पंचवर्णै शुक्लैस्तडुलैर्वा यज्ञियमध्यदेशे स्वस्तिककृत्वा तदुपरि प्रागग्रान्कुशानास्तीर्य तत्र श्रीपर्ण्यादिकाष्ठजपीठ उत्तरच्छद सस्थाप्य तच्छ्वेतवस्त्रेणाच्छाद्य तच्चतुर्दिक्षु चत्वारिस्वस्तिकानि कृत्वा तेषु प्रागादितश्चतुर कुभान् । ॐ महीद्यौरित्यादिपूर्वोक्तमंत्रै पूर्णपात्रांतच तुर्ब्राह्मणै पृथङ्मत्राधृत्यासस्थापयेत् ॥ तत्रविशेष । कलशेषुद्धदोदकनदीसंगमोदकचापूर्य पंचमृद क्षिपेत् ॥ पचमृदोयथा ॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्सगमाद्ध्रदादिति ॥ उद्धृतासिवराहेणकृष्णेन शतबाहुना ॥ मृत्तिकेहरमेपापयन्मयादुष्कृतंकृतमितिमंत्रेणक्षिपेत् ॥ गंधद्वारामितिचंदनागरुकेशरकस्तू रीकर्पूरगोरोचनगुग्गुलन्निक्षिपेत् । चदनमालाविभूषितान्कृत्वा कलशस्यमुखेविष्णुरित्यादिदेवदानवइ त्यतपठेत्।ततश्चतुर्षुकलशेषुचत्वारऋत्विज । ॐ त्वन्नोऽग्ने इतिमंत्रेणवरुणमावाह्य षोडशोपचारै सपूज्य। ॐ आनोभद्रा ० ॥ १ ॥ ॐ शन्नोवात ॥ २ ॥ इत्यादि पूर्वोक्तशांतिकमत्रान्पठेयु । तत आचार्योभद्रास

नस्यपूर्वतोहोमार्थस्थंडिलंकृत्वा । तदीशान्यां हस्तमात्रवेदिकायां पीठे वस्त्रादौ वा । ॐ महीद्यौरित्यादि
पूर्णपात्रांतं कलशंसंस्थाप्य । तदुपरि । विनायकांबिकास्वर्णमयमूर्त्योरग्न्युत्तारणपूर्वकप्राणप्रतिष्ठांकृत्वा
संस्थाप्य । आवाहयेत् । तत्र मंत्राः ॥ ॐ गणानांन्त्वागुणपतिंर्ठ हवा० ॥ २ ॥ ॐ तत्पुरुषायविद्महेवक्रतु
डायधीमहि ॥ तन्नोदंतिःप्रचोदयात् । ॐ भूर्भुवःस्वः विनायक इहागच्छ इहतिष्ठ विनायकमावाहयामि ॥
इतिविनायकम् ॥ ॐ अंबेऽअंबिकेंबालिकेनमानयतिकश्चनः॥ ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीम्॥
॥ १ ॥ ॐ सुभगायैविद्महें काममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ २ ॥ ॐ भूर्भुवःस्वगौरि इहा०
गौरीमावाहयामि । इति गौरींचावाहयेत् ॥ ततस्तत्परितोयथावकाशं अक्षतपुंजेषु । ॐ व्योमकेश इहा०
व्योमकेशमावाहयामि ॥ १ ॥ एवं सर्वत्र । पार्वतीं० ॥ २ ॥ भीमजं० ॥ ३ ॥ वसुदेवं० ॥ ४ ॥ अर्कं० ॥ ५ ॥
सोमं० ॥ ६ ॥ मंगलं० ॥ ७ ॥ बुधं० ॥ ८ ॥ बृहस्पतिं० ॥ ९ ॥ शुक्रं० ॥ १० ॥ शनैश्चरं० ॥ ११ ॥ राहुं० १२
केतुं० ॥ १३ ॥ बाहुलेयं० ॥ १४ ॥ विष्णुं० ॥ १५ ॥ एतानिंद्रादिलोकपालांश्चावाह्य । ॐ मनोजूतिरितिप्र
तिष्ठाप्यपाद्यादिषोडशोपचारैर्नाममंत्रेणसंपूज्य । भद्रासनस्यपूर्वतः कृतेस्थंडिले पंचसंस्कारान्कृत्वा

वरदनामानमभिस्थापयत् ॥ अथ विनायकादुत्तरत ग्रहवेद्यां ग्रहस्थापन कुर्यात् ॥ तद्यथा । देशकालौस
कीर्त्य । अद्यप्रारिप्सितस्य कर्मण सांगतासिद्ध्यर्थं आदित्यादिग्रहाणां स्थापनं पूजन च करिष्ये । इति
सकल्प्य तत्र ग्रहपीठमध्ये सूर्याद्यनंतपर्यंत पूर्ववद्ग्रहाणां स्थापन पूजन च कुर्यात् । तदेशान्यां दध्य
क्षतादिभूपितंकलशपूर्वोक्तविधिनासंस्थाप्य तत्र वरुण पूजयेत् ॥ ततोऽग्निसमीपमागत्यान्वाधानं
कुर्यात् । तद्यथा ॥ अद्य० अस्मिन्सग्रहमखविनायकशांत्याख्यकर्मणि देवतापरिग्रहार्थमन्त्राधानं
करिष्ये । इति संकल्प्य । पूर्ववत्कुशकण्डिकांचरूद्वासनांतांकुर्यात् । तत गव्याज्यलोलीकृतेनगौरसर्ष
पकल्केनोद्वर्तितसर्वांगं सर्वौषधीभि सर्वगंधैश्चलिप्तशिरसं यजमानं आचार्यो मंगलवेदघोषैर्भद्रासने
उपवेशयेत् । ततो यजमान पूर्ववृतैश्चतुर्भिर्ऋत्विग्भि स्वस्तिवाचन कारयेत् ॥ भोब्राह्मणा
ममगृहे अद्य करिष्यमाणसग्रहमखविनायकशांत्याख्यस्यकर्मण बह्वपुण्याहं भवतोब्रुवन्तु । अस्तु
पुण्याहं इति द्विजा वदेयु ॥ एवंकल्याणादि० ॥ ततो जीवत्पतिपुत्राभि सुवासिनीभिर्नीरा
जनंकार्यम । ताभ्यश्च यजमानो वस्त्रकंचुक्यादिदद्यादित्याचार । ततः आचार्यो यजमानदक्षिणत उदङ्मु

स्वस्तिष्ठन्पूर्वदेशस्थकलशमादाय । सहस्राक्षंशतधारमृषिभिःपावनंकृतम् ॥ तेनत्वामभिषिंचामिपावमान्यः
पुनंतुते ॥ १ ॥ इतियजमानमभिषिंचेत् ॥ ततो दक्षिणकुंभमादाय । भगंतेवरुणोराजाभगंसूर्योबृहस्पतिः ॥
भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः ॥२॥ इति दक्षिणकुंभेनाभिषिंचेत् ॥ ततःपश्चिमकुंभमादाय । यत्तेकेशेषुदौ
र्भाग्यंसीमंतेयच्चमूर्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापस्तद्घ्नंतुसर्वदा ॥ ३ ॥ इतिपश्चिमकुंभेनाभिषिंचेत् ॥ ततः
उत्तरकलशमादाय । सहस्राक्षं० ॥ १ ॥ भगंतेवरुणो० ॥ २ ॥ यत्तेकेशेषु० ॥ ३ ॥ इति पूर्वोक्तैर्मंत्रैरभिषिंचे
त् ॥ ततश्चतुर्भिर्मिलितैः । कुंभैरभिषेकः ॥ तत्र मंत्राः ॥ एतद्वैपावनंस्नानंसहस्राक्षमृषिस्मृतम् ॥ तेनत्वांशत
धारेणपावमान्यःपुनंत्विमाः ॥ १ ॥ शक्रादिदशदिक्पालाब्रह्मेशकेशवादयः आपस्तेघ्नंतुदौर्भाग्यंशांतिंददतु
सर्वदा ॥ २ ॥ ॐ सुमित्रियानऽआपऽओषधयः संतु ॥ दुर्मित्रियास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मः ॥
॥ ३ ॥ समुद्रागिरयोनद्योमुनयश्चपतिव्रताः ॥ दौर्भाग्यंघ्नंतुतेसर्वेशांतिंयच्छंतुसर्वदा ॥ ४ ॥ पादगुल्फोरुजं
घास्यनितंबोदरनाभिषु ॥ स्तनोरुबाहुहस्ताग्रग्रीवास्यंसांगसंधिषु ॥ ५ ॥ नासाललाटकर्णेषुकेशांतेषुचयत्स्थि
तम् ॥ तदापोघ्नंतुदौर्भाग्यंशान्तिंयच्छंतु सर्वदा॥५॥तत आचार्यःप्राङ्मुखो यजमानस्यपश्चात्तिष्ठन् सव्यपा

णिनाकुशान्यजमानस्यशिरसिप्रागग्रान्निधाय तत्रसार्षपतैलं औदुंबरस्त्रुवेणादाय ॐ मिताय स्वाहा।इदंमिताय न ममेति यजमानस्य त्याग ॥ॐसमिताय स्वाहा इद०।ॐशालाय०इद०। ॐ कटंकटाय० इदं०। ॐ कूष्मांडाय० इद०। ॐ राजपुत्राय० इद०। इति षडाहुतीर्मस्तकेजुहुयात् ॥ ततोऽग्निसमीपमागत्य पवित्रेणाज्योत्पवनादि सोमाय स्वाहेत्यंतं कुर्यात्। तद्यथा। ॐ प्रजापतये स्वाहा। इद प्रजापतये न मम ॥ ॐ इंद्राय० इद० ॥ इत्याघारौ ॐ अग्नये स्वाहा। इद० ॥ ॐ सोमाय०। इद० ॥ इत्याज्यभागौ ॥ इति हुत्वा। पश्चिमोश्रपितचरुणा जुहुयात् ॥ ॐ मिताय स्वाहा। इदं० ॥ १ ॥ ॐ समिताय० इदं० ॥ २ ॥ ॐ शालाय। इदं० ॥ ३ ॥ ॐ कटंकटाय० इदं० ॥ ४ ॐ कूष्मांडाय० इदं० ॥ ५ ॥ ॐ राजपुत्राय० इद० ॥ ६ ॥ तेनैवचरुणा व्योमकेशादीनां होम ॥ ॐ व्योमकेशाय०। इदं० ॥ १ ॥ ॐ पार्वत्यै०। इदं० ॥ २ ॥ ॐ भीमजाय०। इद० ॥ ३ ॥ ॐ वसुदेवाय०। इदं० ॥ ४ ॥ ॐ अर्काय०। इदं० ॥ ५ ॥ ॐ सोमाय०। इदं० ॥ ६ ॥ ॐ भौमाय०। इदं० ॥ ७ ॥ ॐ बुधाय०। इदं० ॥ ८ ॥ ॐ बृहस्पतये०। इदं० ॥ ९ ॥ ॐ शुक्राय०। इदं० ॥ १० ॥ ॐ शनैश्चराय०। इदं० ॥ ११ ॥ ॐ राहवे०। इद० ॥ १२ ॥ ॐ केतवे० ॥ इदं० ॥ १३ ॥

ॐ वाहुलेयाय० । इदं० ॥ १४ ॥ ॐ विष्णवे० । इदं० ॥ १५ ॥ ॐ इंद्राय० । इदं० ॥ १६ ॥ अग्नये० । इदं०
॥ १७ ॥ ॐ यमाय० । इदं० ॥ १८ ॥ ॐ निर्ऋतये० । इदं० ॥ १९ ॥ ॐ वरुणाय० । इदं० ॥ २० ॥ ॐ
वायवे० । इदं० ॥ २१ ॥ ॐ कुवेराय० । इदं० ॥ २२ ॥ ॐ ईशानाय० । इदं० ॥ २३ ॥ ततो यजमानेन
द्रव्यत्यागः कार्यः ॥ इमानि संपादितानिहवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्योमया
परित्यक्तानि न मम ॥ ततो गणेशाय वराहुतिः । ततोग्रहहोमंपूर्ववत्कुर्यात् ॥ ततः स्थापितदेवतानां पंचो
पचारपूजा ॥ ततः ॐ अग्नयेस्विष्टकृते स्वाहा । इदं० ॥ इति स्विष्टकृद्धोमं व्याहृतिहोमं वारुणहोमं च प्राजा
पत्यांतं कृत्वा बलिदानं पूर्ववत् कुर्यात् । ततो हुतशेषचरुणा इंद्रादिलोकपालेभ्यो नाममंत्रैर्बलिंदत्वा शुद्धो
दकेनसुस्नातो यजमानः विनायकसमीपे उपविश्य ॐ तत्पुरुषायविद्महेवक्रतुंडायधीमहि ॥ तन्नोदंतिःप्रचो
दयात् ॥ १ ॥ ॐ सुभगायैविद्महेकाममालिन्यैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ २ ॥ इतिद्वाभ्यां मंत्राभ्यां
विनायकांबिकाभ्यां नमः ध्यायामीत्येवंषोडशोपचारैः संपूज्य । कृताकृततंडुलान् । तिलयुक्तौदनम् । सु
रास्थानेगुडयुक्तंदुग्धम् । मांसस्थानेलवणयुतंपायसम् । मूलकापूपपूरिकोंडेरजस्रग्दध्यन्नपायसगुडमिश्रपिष्ट

मोदकलड्डुका नित्रसुगंधपुष्पकूष्मांडफलानिचैकपात्रे शूर्पेवाकृत्वा। ॐ तत्पुरुषाय० तन्नोदंति ०॥१॥ॐ
सुभगायै० तन्नोगौरी०॥२॥विनायकांबिकाभ्यां नम ॥इमंउपहारंनिवेदयामि॥इति निवेद्य॥कुंकुमगंधदूर्वासर्षप
महितोदकेनांजलिमापूर्य पूर्वोक्तमंत्राभ्यामर्घंदत्वा भूमौशिर कृत्वा । रूपंदेहिजयंदेहिभगवन्देहिमे
भगम् ॥ पुत्रान्देहिधनंदेहि सर्वान्कामांश्चदेहिमे ॥ इति विनायक० । रूपंदेहियशोदेहि भगंभगवतिदेहिमे ॥
पुत्रान्देहिधनंदेहि सर्वान्कामांश्चदेहिमे ॥ १ ॥ इत्यंबिकांचोपतिष्ठेत्। सौभाग्यमंबिकेदेहि रूपभाग्ययशोऽ
पि च ॥ श्रियपुत्रांश्च कामाश्च तथासौख्यंचदेहिमे ॥ १ ॥ गणेशमातरबालेयत्किंचिन्मदभीप्सितम् ॥ एकना
न्नतदेहि देहिगौरिवरानने ॥ २ ॥ तत आचार्य शूर्पेकुशानास्तीर्य कृताकृताद्युपहार पूर्वोक्तं सर्वतत्रनिधाय
चतुष्पथेगत्वा तत्र भूमिजलेनाभ्युक्ष्य तत्रकुशानास्तीर्य तत्रमंत्रोक्तदेवता सपूजयेत्। आदित्यादिमंत्रोक्तदेव
ताभ्योनम ।इति मंत्रेणषोडशोपचारै सपूज्य तत्र शूर्पं निधाय बलिं दद्यात्। तत्र मंत्रा । ॐ बलिंगृह्णन्त्विमे
देवा ह्यादित्यावसवस्तथा ॥ मरुतश्चाश्विनौदेवा सुपर्णा पन्नगाग्रहा ॥ १ ॥ असुरायातुधानाश्चपिशाचामा
तरोगणा ॥ शाकिन्योयक्षवेताला योगिन्य पूतनाग्रहा ॥ २ ॥ जृंभका सिद्धगंधर्वानागाविद्याधरानगा ॥

दिक्पालालोकपालाश्च येचविघ्नविनायकाः ॥ ३ ॥ जगतांशान्तिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमे
पापंमासन्तुपरिपंथिनः॥४॥सौम्याभवन्तुतृप्ताश्च भूतप्रेताः सुखावहाः॥ ततोयजमानोगृहमागत्य हस्तौ पादौ
प्रक्षाल्याचामेत् ततः आचार्यः कृतस्यसग्रहमखविनायकशान्त्याख्यस्यकर्मणः सांगतासिद्ध्यर्थं वसोर्धारा
समन्वितं पूर्णाहुतिहोमं करिष्ये।इति संकल्प्यपूर्वोक्तविधिनापूर्णाहुतिवसोर्धारां च हुत्वा भस्मधारणं कुर्यात्
ततः संस्रवप्राशनम् । पवित्राभ्यांमार्जनम्। ब्रह्मणेपूर्णपात्रदानम्॥ब्रह्मग्रंथिविमोकः। प्रणीतान्युब्जीकरणम्।
कृत्वा आचार्यसंपूज्य तस्मैवस्त्रयुगं हेमदक्षिणांच दत्वा ऋत्विग्भ्यो यथाशक्त्यान्येभ्यश्च भूयसींदक्षिणां द
द्यात् ततः ग्रहकलशोदकेनयजमानस्यसकुटुंबस्याभिषेकः।ततो विनायकांबिकयोरुत्तरपूजां कृत्वा।यांतुदेव
गणा इति विसृज्य इमे विनायकाम्बिकयोर्मूर्त्ती आचार्याय तुभ्यमहं संप्रददे इदंग्रहपीठंतुभ्यमहंसंप्रददे ।
इति दत्वा अग्निंगंधादिनासंपूज्य गच्छगच्छेतिविसृज्य कृतस्य सग्रहमखविनायकशान्त्याख्यस्यकर्मणः
सांगतासिद्ध्यर्थं यथाशक्तिब्राह्मणान्भोजयिष्ये । इति संकल्प्य ब्राह्मणान्भोजयित्वा तेभ्योभूयसींदक्षिणां
दत्वा आशिषो गृह्णीयात्॥इति शांतिप्रकाशे विनायकशान्तिप्रयोगः ॥ अथ कूष्मांडीहोमप्रयोगः ॥ तच्चचूडो

पनयनोद्वाहानांप्रारभात्तरमुहूर्तांतरालामेजननाशौचपातेसंकटवशात्प्राप्तकर्मकरणेतच्छुद्ध्यर्थेप्रायश्चित्तीभू
त कार्यं ॥ कृतस्नानादिर्यजमान पत्न्यासंस्कार्येण च सह पीठादावुपविश्य आचम्य । अस्यामुकसंस्कार्य
स्यजननाशौचमध्ये सकटवशेन अमुकसस्कारंकर्तुंकूष्माण्डमंत्रैराज्यहोमं पयस्विनीगोदानं तन्निष्क्रय वा
पचगव्यप्राशन च करिष्ये । इति सकल्प्य निर्विघ्नतार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनमपिकुर्यात् ।
तत कूष्मांडहोमकर्तुं अस्मिन्स्थंडिलेपंचभूसस्कारपूर्वक विटनामानमग्निंस्थापयामीत्यग्निंस्थंडिलेसंस्थाप्य
संपूज्य । दक्षिणतोब्रह्मासनादि आज्यभागांत कृत्वा ( नात्र चरु ) कूष्मांडमंत्रैराज्यहोमं कुर्यात् । तत्र मंत्रा ।
ॐ यद्देवादेवहेडनंदेवासश्चकृमावयम ॥ अग्निर्मातस्मादेनसोविश्वान्मुञ्चत्वंहसस्वाहा । इदमग्नये
न मम ॥ १॥ ॐ यदिदिवायदिनक्तमेनांसिचकृमावयम् ॥ वायुर्मातस्मादेनसोविश्वान्मुञ्चत्वंहस
स्वाहा ॥ इदं वायवे न मम ॥ २ ॥ ॐ यदिजाग्रद्यदिस्वप्नएनांसिचकृमावयम् ॥ सूर्योमा
तस्मादेनसोविश्वान्मुञ्चत्वंहसस्वाहा । इद सूर्याय न मम ॥ ३ ॥ ततो भूराद्या स्विष्टकृदंतादशाहुतय

ततः संस्रवप्राशनादिप्रणीताविमोकांतंहोमशेषंसमाप्य ततः पयस्विनीगोदानंप्रतिगृहीतृब्राह्मणपूजनं च
कुर्यात् । तद्यथा । गांवस्त्रालंकारादिभिःसंपूज्य । देशकालौसंकीर्त्य इमांगांपयस्विनीं यथाशक्त्यलंकृतां
अथवा गोनिष्क्रयीभूतंनिष्कार्धं पादं वा सुवर्णंतन्मूल्यरजतद्रव्यं वा जननाशौचदोषनिरसनार्थं कूष्मांडी
प्रायश्चित्तहोमसांगतासिद्ध्यर्थं प्राप्तकर्मकरणे अधिकारार्थं च अमुकशर्मणेब्राह्मणाय तुभ्यमहंसंप्रददे ।
इति दत्वादानप्रतिष्ठासिद्ध्यर्थं दक्षिणां दद्यात्॥ततःॐगवामंगेषुतिष्ठंतिभुवनानिचतुर्दश॥यस्मात्तस्माच्छि
वंमेस्यादिहलोकेपरत्रच ॥ १ ॥ इति प्रार्थ्य विधिवत्पंचगव्यं कृत्वा । यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमाम
के ॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनमिति मंत्रेण प्राशयेत् ॥ ततो यथाशक्ति ब्राह्मणान्भोजयित्वा
संपूज्य तैराशिषो गृह्णीयात् ॥ इति कूष्मांडीहोमप्रकारः समाप्तः ॥ ॥ ॥ ॥

अथ सूर्यादिग्रहशांतिप्रयोगः ॥ तत्र तावदादित्यस्यशांतिः॥ मदनरतेहस्तनक्षत्रयुतं आदित्यवारं प्रगृह्य सप्त
नक्तव्रतानिभक्तितः कृत्वा प्रतिदिनं रक्तपुष्पाक्षतादिभिरर्कमभ्यर्च्य सप्तमेप्राप्ते प्रातः स्नात्वा शुक्लधौतवा
ससी परिधाय यथायोग्यालङ्कृतः स्वासनेप्राङ्मुखउपविश्य दक्षिणपार्श्वेसंभारान्संस्थाप्य धृतपवित्रति

लक पत्न्यासमारब्धोद्धेराचम्य प्राणानायम्य शांतिपाठं पठित्वा लक्ष्मीनारायणादिदेवान्प्रणमेत् । ततो देशकालौसंकीर्त्य । अद्यपूर्वोच्चरितगुणविशेषणविशिष्टायां शुभपुण्यतिथावमुकगोत्रोऽमुकशर्मा वा गुप्तोऽहं ममश्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम कलत्रादिभि सह जन्मराशे सकाशान्नामराशे सकाशाद्वा जन्मलग्ना द्वर्षलग्नाद्गोचराद्वा चतुर्थाष्टमद्वादशाद्यनिष्टस्थानास्थितसूर्येणसूचितंसूचयिष्यमाणं च यत्सर्वारिष्ट तद्विना शार्थं सर्वदातृतीयैकादशशुभस्थानस्थितवदुत्तमफलप्राप्त्यर्थं तथा दशान्तरदशोपदशाजनितपीडाल्पायुरधि दैवाधिभौतिकाध्यात्मिकजनितक्लेशनिवृत्तिपूर्वकशरीरारोग्यार्थं परमैश्वर्यादिप्राप्त्यर्थं श्रीसूर्यनारायणप्रस न्नार्थं चादित्यशांतिं करिष्ये । इति सकल्प्य । तदगत्वेनगणपतिपूजनं स्वस्तिपुण्याहवाचनमाचार्यवरणं दिग्रक्षणं अग्निस्थापनपूर्वकं सामान्यतोग्रहपूजनं च पूर्ववत्कुर्यात् । ततो वेदीमध्येपञ्चताम्रकलशंसंस्थाप्य तदुपरि ताम्रपात्रे शुद्धसुवर्णमयींप्रधानदेवसूर्यप्रतिमामग्न्युत्तारणपूर्वकंसन्निधाय रक्तपट्टवस्त्रयुगच्छन्नां छत्रोपानद्युगान्वितां च कृत्वा घृतेनसंस्नाप्य रक्तचदनरक्तपुष्पाक्षतादिभि पुरुषसूक्तेनषोडशोपचारै सपूज्य लङ्कान्निवेद्य प्रणम्य कुशकंडिकांकृत्वा आज्यभागांते प्रधानदेवसूर्याय दधिक्षीरघृताक्ताश्चरुशाकल्यस

इदं सूर्याय न मम इति
हिता अर्कसमिधः ॐ आकृष्णेनरजसेतिमंत्रेणाष्टोत्तरशतसंख्यया जुहुयात् । इदं सूर्याय न मम इति
त्यागः कार्यः ॥ ततो होमांते दिक्पालक्षेत्रपालादिभ्योबलिदानं पूर्णाहुतिहोमं च कृत्वा ततो मंजिष्ठागजमदं
कुंकुमंरक्तचंदनंजलपूर्णेताम्रकुंभेक्षिप्त्वा पूर्ववदभिषेकं ग्रहस्नानं च कुर्यात् । ततो वेदविदुषे ब्राह्मणाय ॐ
इमांसूर्यप्रतिमां सोपस्करां तुभ्यमहं संप्रददे । इति संकल्प्य । ॐ आदिदेवनमस्तुभ्यंसप्तसप्तेदिवाकर ॥
त्वंरवेतारयस्वास्मानस्मात्संसारसागरात् ॥ १ ॥ इति मंत्रेणप्रतिमां दद्यात् । ततो माणिक्यगोधूमधेनुरक्त
वस्त्रगुडहेमताम्ररक्तचंदनकमलानिरवेःप्रीत्यर्थंदेयानि । ततो विप्रेभ्यो दक्षिणादानम् । देवविसर्जनं च
कृत्वा ब्राह्मणान्संभोजयित्वा कर्मपूर्त्तिकामोविष्णुंस्मरेत् । एवं सूर्यपीडासुघोरासुकृताशांतिः शुभप्रदा ॥
इत्यादित्यशांतिप्रयोगः समाप्तः॥ ॥ ॥ अथ चंद्रशांतिप्रयोगः ॥ चित्रासुसोमवारंसंगृह्य सप्तनक्त
व्रतानि कृत्वा प्रतिदिनं श्वेतपुष्पादिभिः सोममभ्यर्च्य सप्तमेप्राप्ते प्रातः स्नानादि विधाय । देशकालौसं
कीर्त्य अर्कशांत्युक्तसंकल्पान्ते चंद्रशांतिं करिष्ये । इति संकल्प्य गणपतिपूजनादि अग्निस्थापनांतंकर्म
कृत्वा ग्रहपूजनं कुर्यात् । ततो मंडलमध्ये दध्यन्नशिखरे राजतंकुंभंसंस्थाप्य तदुपरि कांस्यपात्रे राजतीं

सोमप्रतिमामग्न्युत्तारणपूर्वकं सन्निधाय श्वेतवस्त्रयुगलेनसव्येष्ट्य पादुकोपानहच्छत्रभोजनासनसयुत च कृत्वा श्वेतपुष्पाक्षतादिभि पुरुषसूक्तेनषोडशोपचारे सपूज्य घृतपायसं निवेद्य। आज्यभागांतहोमंकृत्वा प्रधानदेवसोमाय दधिमधुक्षीरघृताक्ता शाकल्यसहिता पळाशसमिधोष्टोत्तरशतम् । ॐ इमंदेवाऽअस पत्नठं इतिमंत्रेणजुहुयात्। ततो होमांते बलिदानादिपूर्वोक्तवत्कर्मसमाप्य राजतेकुंभे उशीर शिरीष कुंकुम रक्तचदन शंखं च न्यस्य अभिषेकं स्नानचकृत्वा । ॐ महादेवजातिवल्लीपुष्पगोक्षीरपांडुर ॥ सोमसौम्यो भवास्माक सर्वदा ते नमोनम ॥ इतिमंत्रेण ब्राह्मणायप्रतिमांसोपस्करांवंशपात्रस्थतंडुलकर्पूरमौक्तिकश्वेत वस्त्रघृतपूर्णकुंभवृषभांश्च निवेद्य देवविसर्जनं ब्राह्मणभोजनादिसर्वकर्मपूर्ववत्समापयेत्। एवकृतेमहासौम्य सोमस्तुष्टिकरोभवेत् ॥ इति चंद्रशांति ॥ ॥ अथ मगळशांति ॥ स्वात्यांभौमवार सगृह्य सप्तनक्तव्रतेषुभूमा वेवभोजनविधाय सप्तमेप्राप्ते पूर्ववत्सर्वकृत्वा मडलमध्ये कलशसंस्थाप्य तदुपरिताम्रपात्रे सुवर्णमयीं मंगळप्रतिमा निवेश्य रक्तवस्त्रयुगच्छन्नं कुंकुमेनानुलेपितंकृत्वा रक्तपुष्पाक्षतादिभिःपुरुषसूक्तेनषोडशो पचारे सपूज्य भक्त्याकसारनिवेद्य । दधिमधुघृताक्ता शाकल्यसहिता खादर्य समिधोष्टोत्तरशतं

। ततः पूर्ववद्धोमंसमाप्य ॐ कुजकुप्रभवो
ॐ अग्निर्मूर्द्धादिवइति मंत्रेण मंगलायजुहुयात् । इति मंत्रेणकस्मैचित्कुंटुंबिनेब्रा
पित्वंमंगलःपरिगद्यसे ॥ अमंगलंनिहत्याशुसर्वदायच्छमंगलम् ॥ इति मंत्रेणकस्मैचित्कुंटुंबिनेब्रा
ह्मणाय मंगलप्रतिमादानं प्रवालगोधूममसूरिकारक्तवृषभगुडसुवर्णरक्तवस्त्रताम्रादिदानं च कुर्यात् । ततो
रौप्यकुंभे खदिरं देवदारुं तिलान् आमलकानि च न्यस्य अभिषेकं स्नानं च कुर्यात् । अन्यत्सर्वंपूर्ववत् ।
इति भौमशांतिः ॥ ॥ अथ बुधशांतिप्रयोगः ॥ विशाखासुबुधंगृह्य सप्तनक्तव्रतानि कृत्वा सप्तमेप्राप्तेसुवर्णप्रति
मांकांस्यपात्रेसंस्थाप्य शुक्लवस्त्रयुगच्छन्नंकृत्वा शुक्लगंधाक्षतपुष्पादिभिःसंपूज्य गुडोदनोपहारंनिवेद्यदधिम
धुघृताक्ताः शाकल्यसहिताअपामार्गसमिधोऽष्टोत्तरशतं ॐ उद्बुध्यस्वाग्ने इति मंत्रेण जुहुयात् । ततो होमान्ते
ॐ बुधत्वंबुद्धिजननो बोधवान्सर्वदा नृणाम्॥तत्त्वावबोधंकुरुमे सोमपुत्र नमोनमः ॥ इतिमंत्रेण ब्राह्मणायप्र
तिमां नीलवस्त्रसुवर्णकांस्यमुद्गगारुत्मतदासीहस्तिदंतपुष्पाणि च निवेद्य । मृन्मयकलशे नदीसंगमतो यानि
तन्मृत्सहितानि च निक्षिप्य अभिषेकंस्नानंच कुर्यात् । अन्यत्सर्वं आदित्यशांतिवत् ॥ इति बुधशांतिः ॥
अथ बृहस्पतिशांतिप्रयोगः ॥ अनुराधासुगुरुवारंप्रगृह्य सप्तनक्तव्रतानिकृत्वा सप्तमेप्राप्ते पूर्वोक्तादित्यशां
तिवत्सर्वंकृत्वा मंडलमध्येसुवर्णपात्रे सुवर्णमयीं बृहस्पतिप्रतिमांसंस्थाप्य पीतांबरयुगच्छन्नांपीतयज्ञोपवी

तिर्नीपादुकोपानच्छत्रकमंडलुविभूषितं च कृत्वा पीतगंधाक्षतपुष्पादिभिः पुरुषसूक्तेनसंपूज्य खंडखाद्योपहारान्निवेद्य दधिमधुघृताक्ता शाकल्यसहिता अश्वत्थसमिधोष्टोत्तरशतं जुहुयात् । ततो होमांते । धर्मशास्त्रार्थतत्वज्ञज्ञानविज्ञानपारग ॥ विबुधार्तिहराचिंत्यदेवाचार्यनमोस्तुते ॥ १ ॥ इति ब्राह्मणाय गुरो प्रतिमां पुष्परागमणिहरिद्राशर्कराश्वपीतधान्यपीतवस्त्रलवणसुवर्णानिच निवेद्य सुवर्णकलशे औदुंबरं बिल्वं वटं आमलकं च निक्षिप्य तद्युक्तजलेनाभिषेकं स्नानं च कुर्यात् । अन्यत्सर्वमादित्यशांतिवत् । इतिगुरुशांति ॥ अथशुक्रशांतिप्रयोग ॥ ज्येष्ठासु शुक्रं प्रगृह्य सप्तनक्तव्रतेषु भूमावेवभोजनंकृत्वा सप्तमेप्राप्ते वंशपात्रेरजतशुक्रप्रतिमांसंस्थाप्य श्वेतचंदनपंकजे तदभावे श्वेतपुष्पादिभिश्च पुरुषसूक्तेनसंपूज्य घृतसंयुतंपायसंनिवेद्य दधिमधुघृताक्ता शाकल्यसहिता उदुंबरसमिधोष्टोत्तरशतं ॐ अन्नात्परिस्रुतोरसमिति मंत्रेण जुहुयात् । ततो होमांते । भार्गवोभर्गशुक्रश्च श्रुतिस्मृतिविशारद ॥ हित्वाग्रहकृतान्दोषानायुरारोग्यदोस्तुस ॥ ॥ १ ॥ इति मंत्रेणब्राह्मणाय प्रतिमांचित्रवस्त्रश्वेताश्वधेनुवज्रमणिसुवर्णरजततंडुलानि च निवेद्य रजतकलशे गोरोचनं कस्तूरिकां शतपुष्पां शतावरीं च निक्षिप्य तेनाभिषेकं स्नानं च कुर्यात् । अन्यत्सर्वपूर्ववत् । इति

शुक्रशांतिः ॥ अथ शनैश्चरशांतिप्रयोगः ॥ द्वादशाष्टमजन्मस्थेशनौ । श्रावणादिमासेप्रथमशनिवारंप्रगृह्य सप्तनक्तव्रतानिकृत्वा सप्तमेप्राप्ते पूर्वोक्तादित्यशांतिवत्सर्वंकृत्वा लोहपात्रे लोहमयींशनैश्चरप्रतिमांसंस्थाप्य कृष्णवस्त्रयुगच्छन्नां माषतिलकंबलयुतां च कृत्वा पंचामृतेनसंस्नाप्य कस्तूरीकृष्णागुरुकृष्णपुष्पाक्षतादिभिः षोडशोपचारैः संपूज्य कृसरान्नं माषभक्तं पायसं अविलीं पूरिकां च निवेद्य । दधिमधुघृताक्ताः शाकल्यसहिताः शमीसमिधोष्टोत्तरशतं ॐ शन्नोदेवीरिति मंत्रेण जुहुयात् । ततो होमांते बलिदानंपूर्णाहुतिहोमं च संपाद्य प्रतिमां इंद्रनीलमाषतैलतिलकुलित्थमहिषीलोहकृष्णधेनूश्चदद्यात् । लोहकुंभे तिलमाषप्रियंगुगंधपुष्पाणिप्रक्षिप्य तद्युक्तजलेनाभिषेकं स्नानं च कुर्यात् । अन्यत्सर्वंपूर्ववत् ॥ इति शनैश्चरशांतिः ॥ अथ राहुकेतुशांतिप्रयोगः ॥ शनैश्चरवारे राहुव्रतं प्रगृह्य सप्तनक्तानिकृत्वा सप्तमेप्राप्ते लोहपात्रे राहोर्लोहप्रतिमां संस्थाप्यकृष्णवस्त्रयुगच्छन्नां च कृत्वा पंचामृतेनसंस्नाप्य गंधपुष्पाक्षतादिभिः संपूज्य पायसंनिवेद्य दधिमधुघृताक्ताः शाकल्यसहितादूर्वासमिधोष्टोत्तरशतं ॐ कयानश्चित्रेतिमंत्रेणजुहुयात् । ततो होमांते प्रतिमादानंकृत्वा गोमेदाश्वनीलवस्त्रकंबलतैलतिललोहानिराहवे वैडूर्यतैलतिलकंबलकस्तूरिछागवस्त्राणिचकेतवेदद्यात्

माहिषेशृंगे गुग्गुलं हिंगुल हरताल मन सिलां च निक्षिप्य तेनाभिषेक स्नान च कुर्यात्। अन्यत्सर्वंब्राह्मण भोजनादि पूर्ववत् । एवमेवकेतुशांतिस्तत्र समिध कुशमय्य । मंत्र ॐ केतुकृण्वन्नित्यादि । स्नानं तु वराहविहितपर्वताग्रमृदं छागक्षीरं च खड्गपात्रे कृत्वा कुर्यात् । अन्यत्सर्वं पूर्वोक्तशांतिवत् ॥ इति राहुकेतुशांतिप्रयोग समाप्त ॥ अथ सप्तग्रहादियोगशांतिप्रयोग ॥ मदनरत्ने । अथात सप्रवक्ष्यामिग्रहयोगास्यशांतिकम् ॥ एकर्क्षेतिग्मराशोवाएकराश्यर्क्षभेदने ॥ १ ॥ शशिसूर्य समायुक्तेग्रहत्रयसमन्विते ॥ दुर्भिक्षादिभयचैवचतुर्ग्रहसमन्विते ॥ २ ॥ महारोगभयंराष्ट्रक्षयोवृष्टिवि नाशनम् ॥ पंचग्रहसमायोगेदुर्भिक्षसंकरादिकम् ॥ ३ ॥ नृपवैरंगर्भनाशोजायतेजननाशनम् ॥ ग्रहषट्कस मायोगेमंत्रिणांमरणभवेत् ॥ ४ ॥ पश्वश्वादिभयसर्वसंकरादिजनक्षय ॥ पट्टराज्ञोविनाशोवामहाभयमथा पिवा ॥ ५ ॥ सप्तग्रहसमायोगेक्षितीशमरणंध्रुवम् ॥ जगत्प्रलयमेवापितदानिर्मानुषंजगत् ॥ ६ ॥ सूर्य स्या द्व्यतिरिक्तश्चेत्तदायोगोमहाद्भुत ॥ विनाचंद्रेणयोगोपिजगत्प्रलयकारक ॥ ७ ॥ तदृक्षजातजंतूनांमहारोगो महाभयम् ॥ अर्थनाश स्थाननाशोमानहानिर्नृपीडनम् ॥ ८ ॥ षण्मासाभ्यंतरेवापि ह्यायुर्हानि भ्रियस्तथा॥

जन्माष्टद्वादशेराशौचतुर्थंपंचमेपिवा ॥ ९ ॥ पूर्वोक्तफलमेवातस्तस्याः शांतिंप्रयत्नतः ॥ कुर्याद्दोषानु सारेण वित्तशाठ्यंनकारयेत् ॥ १० ॥ अथ प्रयोगः ॥ तत्रतावज्जन्माष्टद्वादशचतुर्थपंचमराशिस्थेषु सूर्यादि सप्तग्रहेषु षट्कादिग्रहेषु वा पूर्वोक्तआदित्यादिशांत्युक्तसप्तनक्तव्रतानि तत्तद्वासरेषु कृत्वा चंद्रताराद्यनुकूलेसुदिनेशांतिंकुर्यात् । तद्यथा । प्रातःस्नात्वा शुक्लधौतवाससीपरिधाय नित्यावश्यकंसमाप्य स्वासनेप्राङ्मुखउपविश्य दक्षिणपार्श्वेसंभारान्संस्थाप्य सपत्नीकोयजमानोद्विराचम्य प्राणानायम्य शांतिपाठंगणपत्यादिस्मरणं च कृत्वा संकल्पं कुर्यात् ॐ अद्येत्यादिदेशकालौसंकीर्त्य अमुकगोत्रोऽमुकशर्माहं मम श्रुतिस्मृतिपुराणोक्त फलावाप्तये अस्मिन्पुण्याहे ममजन्मराशौ जन्मनक्षत्रे वा जन्मराशेः सकाशाद्वा चतुर्थाष्टमद्वादशपंचमाद्यनिष्टस्थानस्थिताः सूर्यादयः सप्तग्रहास्तैः सूचितं सूचयिष्यमाणं च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदातृतीयैकादशशुभस्थानस्थितवच्छुभफलप्राप्त्यर्थं तथा दशांतरदशोपदशादिनदशाजनितपीडाल्पायुरर्थनाशस्थाननाशमानहानिमहारोगदुर्भिक्षादिमहाभयाधिदैवाधिभौतिकाध्यात्मिकजनितक्लेशनिवृत्तिपूर्वकशरीरारोग्यार्थं परमैश्वर्यादिप्राप्त्यर्थं श्रीसूर्यादिग्रहप्रसन्नार्थं च सनवग्रहमखां सूर्यादिसप्तग्रहयोगशांतिं करिष्ये। इति संक

ल्प्य गणपतिपूजनादि दिग्रक्षणांतंकर्मपूर्ववत्कुर्यात्।ततो हस्तमात्रकेचतुरस्रेकुंडे स्थंडिले वा पंचभूसंस्कार पूर्वक वरदनामानमग्निं प्रतिष्ठाप्य तदैशान्यांदिशिचतुरस्रंहस्तमात्रंस्थंडिलं च कृत्वा तत्र तंडुलैर्नवग्रहमंडलंविधाय अक्षतपुंजेषुसूर्यादितत्तद्ग्रहप्रतिमांस्वर्णमयीमग्न्युत्तारणपूर्वकं संस्थापयेत् । तत पूर्वोक्तग्रहशांति प्रयोगप्रकारेण तत्तद्वैदिकमंत्रैरधिदेवप्रत्यधिदेवलोकपालदिक्पालसहितग्रहाणामावाहनस्थापनं च कृत्वा पुरुषसूक्तेनपूजनंकुर्यात्। तद्यथा॥ देशकालौ संकीर्त्य । मम श्रुतिस्मृतिपुराणोक्तफलप्राप्तये ममजन्मराशौ जन्मनक्षत्रे वा जन्मराशेः सकाशाद्वाचतुर्थाष्टमद्वादशपंचमाद्यनिष्टस्थानस्थिता सूर्यादिसप्तग्रहास्तैः सूचितसूचयिष्यमाणयत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवदुत्तमफलप्राप्त्यर्थं शरीरारोग्यार्थं परमैश्वर्यादिप्राप्त्यर्थं सूर्यादिग्रहप्रसन्नार्थं चाधिदेवप्रत्यधिदेवपंचलोकपालदिक्पालसहितसूर्यादिग्रहाणां पूजनं करिष्ये। इति संकल्प्य तत्तद्ग्रहोक्तमंत्रैस्तत्तद्वर्णयुतैर्गंधपुष्पमाल्यादिभिः षोडशोपचारैर्ग्रहान्सपूज्य ग्रहवेदीसमीपेनैवेद्यंसमर्पयेत्। तद्यथा। सूर्याय गुडोदनम्। सोमाय घृतपायसम् । भौमाय मसूरान्नम् । बुधाय क्षीरोदनम् ॥ गुरवे दध्योदनम् । शुक्राय घृतोदनम् । शनैश्चराय तिलपिष्टम्।

राहवेतिलमाषान्नम् । केतवे चित्रौदनम् । अन्येभ्यः सर्वेभ्यः पायसानवद्य । ॐ आदित्यनमस्तु
भ्यमित्यादिपूर्वोक्तप्रार्थनां कुर्यात् । ततः । ईशान्यांग्रहसंबंधिरुद्रकलशस्थापनंकृत्वा तत्र वरुणमावाह्य
संपूज्य कलशस्यमुखेविष्णुरित्यभिमंत्रणं कुर्यात् । ततः कुशकंडिकांकृत्वा आज्यभागांते । इदं
संपादितंसमिच्चरुतिलाज्यादिहविर्द्रव्यं या या यक्ष्यमाणदेवता तस्यै तस्यै देवतायै न मम इत्यु
त्सृजेत् । ततः आदित्यादिग्रहेभ्यः क्रमेणपूर्वोक्तार्कादिसमिच्चरुतिलाज्यद्रव्यैरष्टोत्तरशतमष्टाविंशतिं
वाष्टसंख्यया हुत्वा पूर्वोक्तग्रहहोमद्रव्येण अधिदेवताप्रत्यधिदेवताभ्यश्च चतुःसंख्ययाहुत्वा विनायका
दिलोकपालेभ्य इंद्रादिदिक्पालेभ्यश्च पलाशोदुंबरान्यतम समिच्चरुतिलाज्यद्रव्येण द्विद्विसंख्यया
जुहुयात् । एवं होमं समाप्य स्थापितदेवतानामृडाग्नेश्चोत्तरे पूजनंहुतशेषहविर्द्रव्येण स्विष्टकृद्धोमंव्या
हृतिहोमं च कृत्वा बलिदानांतेपूर्णाहुत्यादिहोमशेषंसमापयेत् । ततो ग्रहकलशोदकमेकस्मिन्पात्रेकृत्वा
तत्र मंजिष्ठां गजमदं कुंकुमं रक्तचंदनं उशीरं शिरीषं शंखं खदिरं देवदारुं तिलान् आमलकानि नदीसंगम
तोयानि तन्मृदः औदुंबरं बिल्वं वटं गोरोचनं शतपुष्पां कस्तूरिकां शतावरीं माषान् प्रियंगुं गंधपुष्पाणि

गुग्गुलुं हिंगुल हरितालं मनःशिलां स्वर्णरजतताम्रलोहानि च निक्षिप्य एकीकृत्य दूर्वापंचपल्लवैरुदङ्मुख आचार्यस्तिष्ठन् चत्वारऋत्विजश्च सपत्नीकं यजमान प्राङ्मुखोपविष्टमभिषिंचेयु । अभिषेकमंत्रास्तु । ॐ आकृष्णेनरजसेत्यादय पूजनप्रकरणोक्ताग्रहमंत्रास्तथाधिदेवप्रत्यधिदेवलोकपालदिक्पालत्र्यंबकक्षेत्र पालमंत्राश्च तथा पूर्वोक्तशांत्यभिषेकमंत्रा आदिदेवनमस्तुभ्यमित्यादिग्रहप्रार्थनामंत्राश्च ज्ञेया । एवमभि षेकानंतरं सर्वौषधीरनुलिप्य शुद्धोदकेनस्नानं कुर्यात् । तत शुक्लांबरधरोधृतमंगलतिलक सपत्नीकोयज मान स्वासनेप्राङ्मुख उपविश्य आचम्य आज्यावलोकनंकुर्यात् । ततो दक्षिणादानम् । सूर्यायकपिलां धेनुशंखदद्यात्तथेंदवे ॥ रक्तंधुरंधरंदद्याद्भौमायककुदान्वितम् ॥ १ ॥ बुधायजातरूपंतुगुरवेपीतवाससी ॥ श्वेताश्च भृगवेदद्यात्कृष्णांगामर्कसूनवे ॥ २ ॥ आयसंराहवेदद्यात्केतुभ्यश्छागमुत्तमम् ॥ सुवर्णेनसमा का र्यायजमानेनदक्षिणा ॥ ३ ॥ सर्वेषामथवागावोदातव्याहेमभूषिता ॥ सुवर्णमथवादद्याद्गुरुर्वायेनतुष्यते ॥४॥ तत कृतस्यकर्मण सांगतासिद्ध्यर्थं आचार्यर्त्विगादिभ्यो यथाशक्ति दक्षिणांदत्वा अन्येभ्योभूयसीं दक्षिणां दत्वा तेषामाशिषोगृह्णीयात् । ततो देवताभिविसर्जनंकृत्वा ब्राह्मणान्भोजयेत् । अन्यत्सर्वंपूर्वोक्तशांतिवत् ।

इति सप्तग्रहयोगशांतिप्रयोगः ॥ अथ विवाहादौ गुरुपूजाप्रयोगः ॥ मदनरत्ने । कन्यायाविवाहकालेब्राह्मण
स्योपनयनेचगुरुशुद्धचभावेगुरुपूजाकार्या ॥ तत्र प्रयोगः ॥ गुरुसंक्रांतौस्वाभ्युदयेषु वा गुरुवासरे प्रातर्नित्य
कर्मसमाप्य आचम्य प्राणानायम्य देशकालौसंकीर्त्य ममामुककुमारस्य वा उपनयनकाले कन्या यावि
वाहे वा अमुकानिष्टस्थानस्थितगुरुदोषनिवृत्यर्थं आयुरारोग्यप्राप्त्यर्थं गुरुप्रसन्नार्थं गुरुपूजां शांतिं करिष्ये ।
इति संकल्प्य तदंगत्वेन गणपतिपूजनं पुण्याहवाचनं च कृत्वा आचार्यादिवरणं कुर्यात्। ततः कुंडेस्थंडिले
वा वरदनामानमग्निंप्रतिष्ठाप्य तदैशान्यांदिशि हरिताक्षतनिर्मितदीर्घचतुरस्रमंडलमध्ये नूतनंताम्रकलशं
कलशस्थापनविधिना संस्थाप्य तन्मध्ये यूथिकां दमनवृक्षपत्राणि गुडूचीं अपामार्गं वायविडंगं शंखिनीं
वचां सहदेवीं विष्णुक्रांतां शतावरीं कुष्टं जटामांसीं हरिद्राद्वयं देवदारुं शैलेयं शठीं चंदनं च पंचगव्यं
अश्वत्थादिपंचपल्लवान् पंचरत्नानि च निक्षिपेत् । ततः कलशोपरि सुवर्णपात्रेस्वर्णमयीगुरुप्रतिमां अग्न्युत्ता
रणपूर्वकं सन्निधाय पीतपट्टवस्त्रद्वयेनाच्छाद्य पुरुषसूक्तेन पीतगंधाक्षतपुष्पादिभिः षोडशोपचारैः संपूजयेत् ।
ततः कुशकंडिकां कृत्वा आघाराज्यभागांते दधिमधुघृताक्ताः शाकल्यपायससहिता अश्वत्थसमिधोष्टोत्तर

शतम् । ॐ बृहस्पतेऽअतियदर्य्यो इति मंत्रेण जुहुयात्। ततो होमांते पुन पीतगंधपुष्पैर्धूपदीपदध्योदनने
वेद्यफलतांबूलदक्षिणादिभिर्गुरुंसंपूज्य प्रार्थनां कुर्यात् । नमस्तेंगिरसांनाथ वाक्पतेऽथबृहस्पते ॥ क्रूरग्रहै
पीडितानाममृतायनमोनम ॥ १ ॥ इति प्रार्थ्य पीतगंधाक्षतपुष्पयुतताम्रपात्रस्थजलेनार्घ्यं दद्यात्। गभीर
दृढरूपाङ्गदेवेज्यसुमतेप्रभो ॥ नमस्तेवाक्पतेशांतगृहाणार्घ्यं बृहस्पते ॥ १ ॥ इत्यर्घ्यं दद्यात्। तत । भक्त्या
यत्तेसुराचार्य होमपूजादिसत्कृतम् ॥ तत्त्वगृहाणशांत्यर्थं बृहस्पतेनमोनम ॥ १ ॥ जीवोबृहस्पति सूरिरा
चार्योगुरुरंगिरा ॥ वाचस्पतिर्देवमंत्री शुभकुर्यात्सदामम ॥ २ ॥ इति पुन प्रार्थयेत्। ततो होमशेषंसमाप्य
प्रतिमादानान्ते कलशोदकेन सपत्नीकंयजमानसपुत्रं ॐ इदमाप० ॥ १ ॥ तामग्निवर्णां० ॥ २ ॥ याऽओ
षधी ॥ ३ ॥ अश्वावती ॥ ४ ॥ यद्देवादेवहेडनमिति कूष्मांडसूक्तादिभिश्चाभिषिंचेत्। तत आज्यावलोकन
कृत्वा आचार्यायसोपस्करांधेनुसहितां गुरुप्रतिमां दत्वा ऋत्विगादिभ्यो दक्षिणांदद्यात् । ततो दानम् ।
अश्वं सुवर्णमधुपीतवस्त्रं सपीतधान्यलवणं सुपुष्पम् ॥ सशर्करंतद्रजनीप्रयुक्तं दुष्टायशांत्यैगुरवेप्रणीतम् ॥१॥
एव यथाशक्त्यश्वादीनिदानानिसंपाद्य। देशकालौसंकीर्त्य मम अमुकस्य वा उपनयनेविवाहे वा अमुकानि

ष्टस्थानस्थितगुरुदोषशांत्यर्थं आयुरारोग्यप्राप्त्यर्थं गुरुप्रसन्नार्थं इमान्यश्वादीनिदानानिनानादैवतानि यथाशक्तिकल्पितानि अमुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इति संकल्प्य ब्राह्मणायदद्यात् ततो दानप्रतिष्ठार्थंदक्षिणांदत्वा देवान्विसृज्य ब्राह्मणान्भोजयेत् । ततः कर्मपूर्तिकामो विष्णुंस्मरेत् । एवम् संक्रांतावपिकौंतेय तथास्वाभ्युदयेषुच ॥ कुर्वन्बृहस्पतेःपूजामभीष्टंफलमाप्नुयात् ॥ एवं संकटेचतुर्थद्वादश स्थोगुरुर्द्विवारमष्टमस्त्रिवारंहोमादिरूपपूजयार्चितः शुभः । इति गुरुपूजाशांतिः समाप्ता ॥ अथ यात्रादिषु प्रतिशुक्रशांतिप्रयोगः ॥ मात्स्ये। अत्यावश्यके यात्रारंभे यात्रावसाने वा गृहप्रवेशे प्रतिशुक्रशांतिः कार्या ॥ तत्र विधिः । देशकालौ संकीर्त्य मम यात्रारंभे प्रतिशुक्रजनितानिष्टफलनिवृत्तिपूर्वकंशुभफलप्राप्त्यर्थं आयु रारोग्यप्राप्त्यर्थं च प्रतिशुक्रशांतिं करिष्ये । इति संकल्प्य सुमुखश्चैकदंतश्चेत्यादिना गणपतिं संपूज्य पुण्या हवाचनंकुर्यात्।ततो मंडलमध्ये तंडुलपूरितंशुक्लपुष्पांबरयुतं सुवर्णपात्रं वा राजतं कांस्यपात्रं वा निधाय तत्र राजतं शुक्रं संस्थाप्य शुचिमुक्ताफलसमन्वितं च कृत्वा पुरुषसूक्तेन आवाहनादिषोडशोपचारैः संपूज्य ॐ नमस्तेसर्वलोकेश नमस्ते भृगुनंदन॥कवे सर्वार्थसिद्ध्यर्थंगृहाणार्घ्यंनमोस्तुते ॥इत्यर्घ्यं दद्यात्।ततः पूर्वो

क्तचित्रवस्त्रश्वेताश्वधेनुवज्रमणिसुवर्णरजततंडुलादिदानद्रव्यधेनुसहितां शुक्रप्रतिमां सामगायनिवेद्य प्रणि
पत्यविस जयेत्।एवमेवबृहस्पते पूजामपिकुर्यात्।इति प्रतिशुक्रादिशांतिप्रयोग ॥अथ जन्मनिकुष्टकालास्त
च्छांतय ॥ तत्रादौ वहुशांत्यंगत्वात् गोमुखप्रसवशांतिप्रयोग ॥गर्ग ।जन्मर्क्षेशुभदिनेषा । देशकालौ संकीर्त्य
अस्यबालकस्यामुकनक्षत्रोत्पत्तिमूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवशांतिं करिष्ये ।
इति संकल्प्य गणेशपूजनमात्रंकृत्वा आचार्यंवृणुयात् । ततः आचार्य श्वेतपंकजमध्ये यथाशक्तिव्रीहीन्नि
क्षिप्य तेषु शूर्पं निधाय शूर्पे रक्तवस्त्रंप्रसार्यतिलान्विकीर्य प्राङ्मुखंशिशुंनिधाय सूत्रेणशूर्पवेष्टयित्वा शिशु
समीपेगोमुखमानीय प्रसव भावयित्वा मिलितेनपचगव्येन विष्णुर्योनिमितिसूक्तेनशिशुंस्नापयित्वा । गवा
मंगेष्विति मत्रेण गवामंगेषुतिष्ठतिभुवनानिचतुर्दश यस्मात्तस्माच्छिवमेस्यादिहलोकेपरत्रच॥१॥ इति गोवा
मंगेषु सर्वांगेषु वा स्पृशेत् । ततो विष्णोश्रेष्ठेनेतिमंत्रेण आचार्य शिशुमादाय मात्रे दद्यात् मातापित्रे
पितामात्रे दत्वा वस्त्रंसप्रसार्य पुत्रमीक्षेत तत आचार्य शिशुं पंचगव्येन । ॐ आपोहिष्ठामयो
भुवस्तानऊर्जेदधातन॥महेरणायचक्षसे ॥१॥ योवःशिवतमोरसस्तस्यभाजयतेहनः॥ उशतीरिवमातरः॥२॥

तस्माऽअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचन ॥ ३ ॥ इति तिसृभिरभिर्षिचेत् ॥ ततः
पिता । ॐ अंगादंगात्संभवसिहृदयादभिजायते ॥ आत्मावैपुत्रनामासिसजीवशरदःशतमितिमूर्द्धनि शिशुं
त्रिरवघ्रायमात्रेदत्वा । अस्यगोमुखप्रसवकर्मणः पुण्याहं भवंतोब्रुवंत्वित्युक्त्वा पुण्याहं वाचयित्वा आचा
र्याय गां दत्वा ग्रहप्रीतयेप्रत्येकंगोवस्त्रस्वर्णधान्यानिदत्वा यथाशक्तिभूयसींदक्षिणां दद्यात् । ततःआचार्योऽ
ग्निप्रतिष्ठाप्य पीठे नवग्रहान् अधिदेवतादिरहितान् संपूज्य कुशकंडिकां कृत्वा आज्यभागांते अग्नेरीशा
न्यां कुंभं संस्थाप्य पूर्णपात्रोपरि ॐ तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः।दिवीवचक्षुराततम् । इतिविष्णुप्र
तिमां निधाय ॐ भूर्भुवः स्वर्विष्णोइहागच्छ इहतिष्ठेति विष्णुमावाह्य । तत्रैव ॐ तत्वायामिब्रह्मणावन्द
मानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंशठंसमानऽआयुःप्रमोषीरिति वरुणप्र
तिमायां ॐ भूर्भुवः स्वर्वरुण इहागच्छ इहतिष्ठेतिवरुणंचावाह्य ॐ विष्णुवरुणाभ्यांनमः । इति षोडशोप
चारैः संपूजयेत् । ततः कुंभंस्पृष्ट्वावक्ष्यमाणमंत्रान् जपेत् । यतऽइंद्रभयामहततोनोऽअभयंकृधि॥ मघवञ्छ
ग्धितवतन्नऽऊतिभिर्विद्विषोविमृधोजहि ॥ १ ॥ त्वंहिराधस्पतेराधसोमहःक्षयस्यासिविधुतः।तंत्वावयंमघव

न्निन्द्रगिर्वणः सुतावन्तोहवामहे ॥ २ ॥ इद्रस्यवृतवृत्रहापरस्यानोवरेण्य ॥ सनोरक्षिषच्चरमसमध्यमसप
श्चात्पातुनः पुरः ॥ ३ ॥ त्वन्नः पश्चादधरादुत्तरात्पुरऽइन्द्रनिपाहिविश्वतः ॥ आरेऽअस्मत्कृणुहिदैव्यंभयमारे
हेतीरदेवीः ॥ ४ ॥ अद्याद्याश्वश्वऽइन्द्रत्राश्वपरेचनः विश्वाचनोजरितृन्त्सत्पतेऽअहादिवानक्तंचरक्षिषः
॥ ५ ॥ प्रभङ्गीशूरोमघवातुवीमघः संमिश्लोवीर्यायकम् ॥ उभातेबाहूवृषणाशतक्रतोनियावज्रं
मिमिक्षतुः ॥ ६ ॥ इतिजस्वामिलितैर्दधिमध्वाज्यैर्होमंकुर्यात् । तत्रमंत्रा । ॐ आपोहिष्ठा०
स्वाहा ॥ १ ॥ योव शिव० स्वाहा ॥ २ ॥ तस्माऽअरंग० स्वाहा ॥ ३ ॥ इति हुत्वा
ॐ अप्सुमेसोमोऽअब्रवीदन्तर्विश्वानिभेषजा॥अग्निंचविश्वशम्भुवमापश्चविश्वभेषजीः स्वाहा इदमद्भ्य ॥ १ ॥
तद्विष्णोः परमंपदं सदापश्यतिसूरयः दिवीवचक्षुराततं स्वाहा ॥ १ ॥ इदंविष्णवे ॥ अक्षीभ्यां तेनासिकाभ्यां
कर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वाया विवृहामिते स्वाहा॥ १ ॥इदंयक्ष्मणे॥ग्रीवाभ्यस्तऽउ
ष्णिहाभ्यःकीकसाभ्योऽअनूक्याद्यक्ष्मंदोषण्य मंसाभ्यांबाहुभ्यांविवृहामितेस्वाहा ॥ २ ॥ इदंय

क्ष्मणे॥आंत्रेभ्यस्तेगुदाभ्योवनिष्ठोर्हृदयादधि॥यक्ष्मंमतस्नाभ्यांयकः प्लाशिभ्योविवृहामिते० ॥ ३ ॥ ऊरुभ्यां
तेऽअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यांयक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते० ॥ ४ ॥ मेहनाद्वनंकरणाल्लोमं
भ्यस्तेनखेभ्यः ॥ यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते० ॥ ५ ॥ अंगादंगाल्लोम्नोजातंपर्वणिपर्वणि॥यक्ष्मं
सर्वस्मादात्मनस्तमिदंविवृहामितेस्वाहा ॥ ६ ॥ इदंयक्ष्म गे० ॥ इति हुत्वा आकृष्णेनरजसेत्यादिनवग्रहमं
त्रैश्चहुत्वा स्विष्टकृदादिकर्मशेषंसमाप्य ब्राह्मणान् भोजयेत् । इति गोमुखप्रसवशांतिप्रयोगः समाप्तः ॥
॥ अथ कृष्णचतुर्दशीशांतिप्रयोगः ॥ ॥ मदनरत्ने गर्गः तत्र चतुर्दश्याः षडंशानांमध्ये द्वितीय
तृतीयषष्ठांशेषु जनने गोमुखप्रसवपूर्वकं चतुर्दशीशांतिः । अन्यभागे केवलचतुर्दशीशांतिः । नामकरणा
त्पूर्वं शुभेह्नि । अस्यबालकस्यकृष्णचतुर्दशीजन्मसूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृष्णचतुर्द
शीजननशांतिंकरिष्ये । इति संकल्प्य । गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वर
णानि कुर्यात् । ततः आचार्योगौरसर्षपान्विकीर्य भूमिंप्रोक्ष्य आग्नेय्यादिषुचतुर्विदिक्षु चतुरः कुंभान्मध्ये

शतच्छिद्रंचसंस्थाप्य तस्मिन् पंचमृद पंचपल्लवान् पंचरत्नानि पंचत्वच पंचधान्यानि सुवर्णं शतौषधानि
च प्रक्षिप्य त्रिभिर्वस्त्रैर्माल्यादिभिश्च वेष्टयित्वा पूर्णपात्रोपरि कर्षकृतां तदर्द्धार्द्धकृतां वा रुद्रप्रतिमाम् । ॐ
त्र्यंबकंयजामहेसुगंधिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ इति मंत्रेणसंपूज्य ।
सर्वेसमुद्रा सरितस्तीर्थानिजलदानदा ॥ आयांतुयजमानस्यदुरितक्षयकारका ॥ १ ॥ इति तीर्थान्यावाह्य ।
आग्नेयकलशे । इमम्मेवरुणश्रुधीहवमद्याचमृडयत्वामवस्युराचके ॥ इति मंत्रेण ॥ १ ॥ नैर्ऋते ॥ १ ॥ तत्वा
यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोद्ध्युरुशꣳस मानऽआयुः प्रमोषीः ॥
इति वायव्ये ॥ २ ॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानो
विश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥ इति ईशाने ॥ ३ ॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्यु
ष्टौ ॥ अवयक्ष्वनोवरुणꣳ रराणोवीहिमृडीकꣳ सुहवोनऽएधि॥ इति मंत्रेण च ॥ ४ ॥ वरुणमावाह्य । ॐ वरु
णाय नम । इति षोडशोपचारैः संपूजयेत्।ततःआग्नेयादिकलशेषु । ॐ आनोभद्रा ० १३। भद्राऽअग्ने०१२।

सहस्रशीर्षा० १६ । कद्रुद्रायेतिसूक्तानिक्रमेणजपेत् । ॐ आनोभद्राः क्रतवोयन्तुविश्वतोदब्धासोऽ अपरी
तासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानांभद्रासुमतिर्ऋजूयतां
देवानांरातिरभिनोनिवर्त्तताम् ॥ देवानांसख्यमुपसेदिमावयंदेवानऽआयुःप्रतिरन्तुजीवसे ॥ २ ॥
तान्पूर्वयानिविदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥ अर्य्यमणम्वरुण सोममश्विनासरस्वतीनः
सुभगामयस्करत् ॥ ३ ॥ तन्नोवातोमयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणःसोमसुतोम
योभुवस्तदश्विनाशृणुतन्धिष्ण्यायुवम् ॥ ४ ॥ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥
पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्व
वेदाः॥स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु॥६॥पृषदश्वामरुतःपृश्निमातरः शुभंयावानो
विदथेषुजग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसोविश्वेनोदेवाऽअवसागमन्निह ॥ ७ ॥ भद्रङ्कर्णेभिःशृणुयामदेवा

महिदेवहितंयदायुः ॥८॥ शतमिन्नुशरदोऽअन्ति
भद्रम्पश्येमाक्षभिर्यजत्राः॥स्थिरैरङ्गैस्तुष्टुवा॑ꣳसस्तनूभि॒र्व्यशेमहिदेवहितं यदायुः भद्रम्पश्येमाक्षभिर्यजत्राः ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अ
देवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमध्यारीरिषतायुर्गन्तोः ॥ ९ ॥ अ
दितिर्द्यौरदितिरन्तरिक्षमदितिर्माता सपितासपुत्रः ॥ विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्जातमदि
तिर्जनित्वम् ॥ १० ॥ तम्पत्नीभिरनुगच्छेमदेवाःपुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकंगृभ्णानाःसुकृतस्य
लोकेतृतीयेपृष्ठेऽअधिरोचनेदिवः ॥ ११ ॥ आयुष्यंवर्चस्यꣳरायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यंवर्चस्वज्जै
त्रायाविशतादुमाम् ॥ १२ ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वन
स्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशान्तिः शान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १३ ॥
इत्याग्नेयकलशेजपेत् । ॐ भद्राऽअग्नेर्वध्र्यश्वस्यसंदृशोवामीप्रणीतिः॥सुरणाऽउपेतयस्यदीसुमित्राविशोऽअग्न
इन्धतेघृतेनाहुतोजरतेदविद्युतत् ॥ १ ॥ घृतमग्नेर्वध्र्यश्वस्यवर्धनंघृतमन्नंघृतम्वस्यमेदनम्॥घृतेनाहुतऽउर्विया

विपप्रथेसूर्यऽइवरोचतेसर्पिरासुतिः ॥ २ ॥ यत्तेमनुर्यदनीकंसुमित्रःसमीधेऽअग्नेतदिदंनवीयः ॥ सरेवच्छोचसगि
रोजुषस्वसवाजंदर्षिसऽइहश्रवोधाः ॥३॥ यंत्वापूर्वमीलितोवध्र्यश्वःसमीधेऽअग्नेसऽइदंजुषस्वसनःस्तिपाऽउत
भवातनूपादात्रंरक्षस्वयदिदंतेऽअस्मे ॥४॥ भवाद्युम्नीवाध्र्यश्वोतगोपामात्वातारीदभिमातिर्जनानाम् ॥ शूरऽइव
धृषणश्च्यवनः सुमित्रः प्रनुवोचंवाध्र्यश्वस्यनाम ॥ ५ ॥ समज्र्यापर्वत्यावसूनिदासावृत्राण्यार्याजिगेथशूरऽ
इवधृष्णश्च्यवनोजनानांत्वमग्नेपृतनायूंरभिष्याः ॥ ६ ॥ दीर्घतन्तुर्बृहदुक्षायमग्निःसहस्रस्तरीःशतनीथऽऋ
म्वाद्युमान्द्युमत्सुरभिर्मृज्यमानः सुमित्रेषुदीदयोदेवयत्सु ॥ ७ ॥ त्वेधेनुःसुदुघाजातवेदोसश्चतेवसमनासं
वर्धुकत्वंनृभिर्दक्षिणावद्भिरग्नेसुमित्रेभिरिध्यसेदेवयद्भिः ॥ ८ देवाश्चित्तेऽअमृताजातवेदोमहिमानंवाध्र्यश्वप्र
वोचन्॥यत्संपृच्छंमानुषीर्विशऽआन्त्वंनृभिरजयस्त्वावृधेभिः ॥ ९ ॥ पितेवपुत्रमबिभरुपस्थेत्वामग्नेवाध्र्यश्वः
संमर्पयन्॥ जुषाणोऽअस्यसमिधंयविष्ठोतपूर्वाऽअवनोर्व्राधतश्चित्॥१०॥शश्वदग्निर्वध्र्यश्वस्यशत्रून्नृभिर्जिगाय

सुतसोमवद्भिः ॥ समनंचिददहश्चित्रभानोषव्राधन्तमभिनद्धुधश्चित ॥ ११ ॥ अयमग्निर्वध्र्यश्वस्यवृत्रहासनका
त्प्रेद्धोनमसोपवाक्यः–सनोऽअजामीरुनवाविजामीनभितिष्ठशर्धतोवाध्यश्च ॥ १२ ॥ इति नैर्ऋत्यकलशे
जपेत् । ॐ सहस्रशीर्षाइत्यादि ॥ १५ ॥ पुरुषसूक्तंवायव्यकलशेजपेत् । ॐ कद्रुद्रायप्रचेतसेमीढुष्ट
मायतव्यसे । वोचेमशन्तमहृदे ॥ १ ॥ यथानोऽअदितिः करत्पश्वेनृभ्योयथागवे॥यथातोकायरुद्रियम् ॥२॥
यथानोमित्रोवरुणोयथारुद्रश्चिकेतति। यथाविश्वेसजोषसः॥३॥गाथपतिमेधपतिरुद्रंजलाषभेषजम्॥तच्छंयोः
सुम्नमीमहे ॥ ४ ॥ यःशुक्रइवसूर्योहिरण्यमिवरोचते।श्रेष्ठोदेवानांवसुः॥५॥ शंनःकरत्यर्वतेसुगमेषायमेष्येनृ
भ्योनारीभ्योगवे।६।अस्मेसोमश्रियमधिनिधेहिशतस्यनृणाम्।महिश्रवस्तुविनृम्णम्।७।मानःसोमपरिबाधो
मारातयोजुहुरन्त । आनइन्दोवाजेभज ॥८॥यास्तेप्रजाऽअमृतस्यपरस्मिन्धामन्नृतस्य । मूर्धानाभासोमवे
नऽआभूषन्तीः सोमवेदः ॥९॥ इतीशानकुंभेजपेत् ॥ ततोऽग्निग्रहांश्चप्रतिष्ठाप्य आज्यभागांतेरुद्राय अश्वत्थ

प्लक्षपलाशखदिरसमिद्भिश्चर्वाहुतिभिराज्याहुतिभिर्माषैस्तिलैः सर्षपैश्चप्रतिद्रव्यमष्टोत्तरशताष्टविंशत्यन्यत
रसंख्यया ॐ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतात् स्वाहा
इदंरुद्राय ॥ १०८।२८॥ इतिमंत्रेणजुहुयात् ततः प्रजापतये समस्तव्याहृतिभिस्तिलद्रव्येण ॐ भूर्भुवःस्वः
स्वाहा इदंप्रजापतये ॥ १०८।२८ ॥ इतिमंत्रेणतथैवसंख्ययाजुहुयात् ततोग्रहेभ्यः प्रत्येकं अष्टाष्टसंख्यया
समिदाज्यचरुभिरधिदेवादिभ्यएकैकसंख्यसमिच्चर्वाज्याहुतिभिश्चहोमंकृत्वा शेषेण स्विष्टकृतमित्यादिव
लिदानांते शतच्छिद्रगतैश्चतुष्कलशोदकैर्ग्रहकलशोदकेन च साचार्यर्त्विजोयजमानमभिषिंचेयुः। ततः यज
मानोधौतवाससीपरिधायसपरिवारोरूपंरूपमित्याज्यमवलोक्य ॐ रूपेणवोरूपमभ्यागांतुथोवोविश्ववेदा
विभजतु॥ ऋतस्यपथाप्रेतंचन्द्रदक्षिणाविस्वः पश्यव्यन्तरिक्षंयतस्वसदस्यैः १ रूपंरूपम्प्रतिरूपोबभूवतद
स्यरूपम्प्रतिचक्षणाय। इन्द्रोमायाभिः पुरुरूपईयतेयुक्ताह्यस्यहरयःशतादश।त्ययंवैहरयोयंवैदशचसहस्राणि
बहूनिचनन्तातदेतद्ब्रह्मपूर्वमनमवाह्यजमनुः सर्वानुशासनम् २ तत्पात्रंसदक्षिणंविप्रायदत्वा पूर्णाहुतिंहुत्वा

कृतहोमादिकर्म रुद्रायसमर्प्याचार्याय सोपस्करांगांवस्त्रयुग्मंचदत्वा ऋत्विग्भ्योदक्षिणांदत्वा ब्राह्मणान् भोज
येत्॥इतिचतुर्दशीशांतिप्रयोग ॥अथदर्शशांतिप्रयोग ॥नारद ।देशकालौसंकीर्त्य अस्यबालकस्य दर्शजननसू
चितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शजननशांतिंकरिष्ये इतिसंकल्प्य । गणपतिपूजनपुण्या
हवाचनमातृपूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात् तत आचार्य सर्षपान् विकीर्य भूमिंप्रोक्ष्य कुंडात्स्थं
डिलाद्वापूर्वप्रदेशेकुंभसंस्थाप्य तत्रपंचगव्य न्यग्रोधोदुंबराश्वत्थचूतनिंबवृक्षाणां मूलत्वच पल्लवांश्चपंचरत्ना
निच निक्षिप्य वस्त्रयुग्मेनसंवेष्ट्य सर्वेसमुद्रा सरितस्तीर्थानिजलदानदा ॥ आयांतुयजमानस्यदुरितक्षय
कारका । इतितीर्थान्यावाह्य ॐ आपोहिष्ठा० १ योवं शिव० २ तस्माऽअरं ३ ॐ कयानश्चित्रऽआभुवदूती
सदावृधु॑ सखा॥कयाशचिष्ठयावृता १ यत्किंचेदंवरुणदैव्येजनेभिद्रोहंमनुष्या॒ ३ श्चरामसि॥अचित्तीयत्तव
धर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः १ समुद्रज्येष्ठा॒सलिलस्यमध्यात्पुनानायन्त्यनिविशमाना
इन्द्रोयावज्रीवृषभोरराद्रता आपो देवीरिहमामवन्तु १ इतिमंत्रैरुदकमभिमंत्र्य पूर्णपात्रंनिधायवरुणंपूजयेत् ।

ततः कुंभात्पश्चिमे अग्नेः पुरतोहरिद्राक्तैस्ताम्रैः कृष्णैश्चतण्डुलयययाशानतना... त्वंवत्थयतितेजातवेदःस्वधाभिर्यज्ञठं सुकृतञ्जुषस्व
मायाम् ॐयेचेहपितरोयेचनेहयांश्चविद्मयाउंचनप्रविद्म॥ त्वंवत्थयतितेजातवेदः । तद्दक्षिणतोरजतप्रतिमायां ॐ आप्यायस्वसमेतुते
ॐ भूर्भुवः स्वः पितरइहागच्छतइहतिष्ठतइतिपितॄन् । तद्दक्षिणतोरजतप्रतिमायां ॐ भूर्भुवः स्वः सोम इहागच्छ इहतिष्ठ इतिसोमं॰। तदुत्तरतः।
विश्वतं÷ सोमवृष्ण्यम्॥भवावाजस्यसङ्गथे२ ॐ भूर्भुवः स्वः सोम इहागच्छ इहतिष्ठ इतिसोमं॰। सवितानं÷सुवतुसर्वतां
ताम्रप्रतिमायां ॐ सवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात्॥ सवितानं÷सुवतुसर्वतां
तिंसवितानोरासतांदीर्घमायुं÷३ ॐ भूर्भुवः स्वः सूर्य इहागच्छ इहतिष्ठ सूर्यंचावाह्यसर्वान् पूजयेत् । ततोग्निं
ग्रहांश्चप्रतिष्ठाप्यसंपूज्य आज्यभागांते ॐ आयुरारोग्यासिद्ध्यर्थंसर्वारिष्टप्रशांतये ॥ तेषामायुःश्रियेचैवशां
तिहोमंकरोम्यहमिति होमसंकल्पंकृत्वा आदित्यादिग्रहान् अमुकसंख्याभिः समिच्चर्वाज्याहुतिभिः पूर्वमंत्रे
णपितॄन् अष्टाविंशतिसंख्याभिः समिच्चरुभ्यां सोमं सूर्यं च पूर्वोक्तमंत्राभ्यां प्रत्येकमष्टोत्तरशतसंख्या स
मिच्चर्वाहुतिभिश्चजुहुयात् ततो मातापितृशिशून् । हिरण्यवर्णामितिसूक्तेन । ॐ आयुष्यंवर्चस्यमितिनांदी

श्राद्धेपूर्वोक्तेन सूक्तेन ॐसमुद्रज्येष्ठाइत्यनयापूर्व। कया ऋचा च जलधारयाभिषिच्य स्विष्टकृदादिसमापयेत्
ततोयजमानोवलिदानपूर्णाहुत्यंते आचार्यायथथाशक्तिहिरण्यंरजतंकृष्णांधेनुंचसदक्षिणांदत्वा ऋत्विग्भ्य
श्चयथाशक्तिदक्षिणांदत्वा पित्रादीनामुत्तरपूजनंकृत्वा विसृज्य आचार्यायप्रतिपाद्याग्निंविसृज्य ब्राह्मणान्
भोजयित्वा शांतिपाठंपठित्वा स्वस्तिवाचनंकुर्यात् ॥ इतिदर्शशांतिप्रयोग ॥ ॥ ॥ अथमूलशां
तिपद्धति ॥ शौनक अभुक्तमूलोत्पत्तौवर्षाष्टकशिशुत्याग ततः शांति । तदन्यमूलोत्पत्तौद्वादशाहे आगा
मिमूलयुतेशुभेदिने वा अन्यत्रशुभदिनेवा गोमुखप्रसवशांतिंकृत्वा शांति कार्या । तत्रादौशुभेपवित्रदेशेमं
डपकुंडवेदिका यथाविधिविधाय यजमान सुस्नात आचांत कृतनित्यक्रियोयागमंडपंप्रविश्य ब्राह्मणा
नाहूय तद्द्वाराआनोभद्रारित्यादिस्वस्त्ययनमारभेत् । ततोलक्ष्मीनारायणादिदेवान्प्रणम्य ॐ सुमुखश्चैक
दंतश्चेत्यादिगणपतिस्मरणंचकृत्वा प्रतिज्ञासंकल्पंकुर्यात् । देशकालौसंकीर्त्य ममास्यकुमारस्यकुमार्यावा
मूलप्रथमचरणादिजन्मसूचितपित्राद्यरिष्टनिरासार्थंआयुरारोग्यधनधान्यादिसमृद्धिकामनयाश्रीपरमेश्वर
प्रीत्यर्थंसनवग्रहमखांमूलजननशांतिंकरिष्ये इतिसंकल्प्य ॥ गणपतिपूजनपुण्याहवाचनमातृकापूजननांदी

मधुपर्कवस्त्रालंकारादिभिर्यथाविभवमर्च
श्राद्धानिकृत्वा आचार्यब्रह्मसदस्यानृत्विजश्चाष्टौचतुरोवावृत्वा
अस्मिन्कर्मणिआचार्यकर्मकरिष्ये इति संकल्प्य यदत्रसंस्थितामिति
येत् । ततः आचार्यः प्राणानायम्य
कर्मभूमिंप्रोक्ष्य ( मंडपपक्षेमंडपपूजांकृत्वा ) ईशानदेशेवर्णकैः स्वस्ति
सर्षपान्विकीर्य आपोहिष्ठादिमंत्रैः
महीद्यौः पृथिवीचंनऽइमंयज्ञम्मिमिक्षताम्॥पिपृतान्नोभरीमभिः॥
विरच्य तत्ररुद्रकलशंस्थापयेत् तद्यथा ॐ
समितिद्रोणप्रमाणव्रीहीन्निक्षिप्य ॐ ओषधयः समवदन्तसोमेनसह
इति भूमिंस्पृष्ट्वा ॥ १ ॥ तत्र ओषधयः
॥ २ ॥ तत्र आजिघ्रेतिकलशंस्थापयेत् ॐ आजिघ्रकलशं
राज्ञां॥यस्मैकृणोतिब्राह्मणस्तꣳ राजन्पारयामसि
पुनरूर्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ ३ ॥
म्मह्यात्वाविशन्त्विन्दवः ॥
जलंपूरयेत् ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कंभसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसि
वरुणस्योत्तंभनमसीति
॥ ४ ॥ गंधद्वारामितिगंधं० ॐ गंधद्वारांदुराधर्षांनित्यपुष्टांक
वरुणस्यऽऋतसदनमासिवरुणस्यऽऋतसदनमासीद
॥ ५ ॥ याऽओषधीरितिसर्वौषधीः । ॐ याऽओषधीःपूर्वाजातादेवे
रीषिणीम्॥ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम्

भ्यस्त्रियुगम्पुरा॥मनेनुबभ्रूणामहर्ठंशतन्धामानिसप्तच ॥६॥ काण्डात्काडादितिदूर्वा ।ॐ काण्डात्काण्डात्प्ररो
हन्तीपरुषः परुषस्परि॥एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ७ ॥ अश्वत्थेवेतिपचपल्लवान्० । ॐ अश्वत्थेवोनि
षदनम्पर्णेवोवसतिष्कृता॥गोभाजइत्किलासथयत्सनवथपूरुषम् ॥८॥ स्योनापृथिवीतिसप्तमृद ।ॐ स्योना
पृथिविनोभवान्नृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ ९ ॥ या फलिनीरितिफलम् । ॐ याः फलिनीर्याऽ
अफलाऽअपुष्पायाश्चपुष्पिणीः॥बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वर्ठंहसः ॥१०॥ परिवाजपतिरितिपंचरत्नानि ।
ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत॥दधद्रत्नानिदाशुषे॥११॥हिरण्यगर्भेतिहिरण्यम्। ॐ हिरण्य गर्भः
समवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत॥सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम ॥१२॥ आपो
हिष्ठेतित्र्यृचेनपंचगव्यंचप्रक्षिप्य।ॐआपोहिष्ठा०१३ ॐयोवः शिव०१४ॐतस्माऽअरंग०१५युवासुवासाइति
रक्तवस्त्रेणकलशंसंवेष्ट्यॐयुवासुवासा परिवीतऽआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयऽउन्नय

॥१६॥पूर्णादर्वीतितदुपरिताम्रादिमयं तंडुलपूर्णपात्रंनिदध्यात् । ॐपुर्णादर्विपरा
न्तिस्वाध्योमनसादेवयन्तः ॥१६॥पूर्णादर्वीतितदुपरिताम्रादिमयं तंडुलपूर्णपात्रंनिदध्यात् । ॐपुर्णादर्विपरा
पतसुपूर्णापुनरापत । वस्नेवविक्रीणावहाऽइषमूर्ज्जंꣳ शतक्रतो ॥ १७ ॥ ततः तत्वायामीतिवरुणमावाह्य ।
ॐ तत्वांयामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳस मानऽआयुः
प्रमोषीः ॥ १ ॥ वरुणं सांगं सपरिवारं आवाहयामि ॐ भूर्भुवः स्वः अपांपतयेवरुणायनमः । इतिमंत्रेण
षोडशोपचारैः संपूजयेत् ॥ ततोगंगाद्यावाहनम् ॥ सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः ॥ आयांतुमम
शांत्यर्थंदुरितक्षयकारकाः ॥ १ ॥ ततः कलशाभिमंत्रणम् । कलशस्यमुखेविष्णुरित्यादि । देवदानवसंवादे
इतिप्रार्थनांचकुर्यात् ॥ एवं रुद्रकलशंसंस्थाप्यतदुपरिसुवर्णनिर्मितांरुद्रप्रतिमामग्न्युत्तारणपूर्वकंसन्निधाय
त्र्यंबकमितिमंत्रेणावाह्यपूजयेत्। त्र्यंबकमितिमंत्रस्यवसिष्ठऋषिरनुष्टुप्छंदोरुद्रोदेवतारुद्रावाहनेविनियोगः ।
ॐ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्ॐ भूर्भुवःस्वःभगवन्
रुद्र इहागच्छ इहतिष्ठ इत्यावाह्य ॐ रुद्रायनम इतिषोडशोपचारैः पूजयेत् ॥ ततःएकऋत्विक्रुद्रकुंभंस्पृष्ट्वा

ॐ नमस्तेरुद्रमन्यव इतिरुद्राध्यायं ॐ वाजश्चमे इति चमकाध्यायंचपठेत् ( पाठाकरणेप्रत्यवायोभवति ) तत रुद्रकुंभात्प्रागुदग्वाचतुर्विंशदलपंकजंपचवर्णैस्तण्डुलै पिष्टैर्वाकृत्वा तत्रकर्णिकायांप्राग्वत्कुंभंसंस्थाप्य तच्चतुर्दिक्षुचतुर कलशान्स्थापयित्वा पूर्णपात्रनिधानांतंकृत्वासर्वत्रवरुणमावाह्यपूजयेत् ( प्रतिकलशस्थापनेमन्त्रावृत्ति ) पंचकुंभासंभवेचतु प्रस्तवर्णपचवर्णकुंभंस्थापयित्वासर्वतत्रैवकुर्यात् । तत पूर्वस्थापितकुंभचतुष्टयेऽक्रमेण प्रथमे देवदारु—चंदन—रक्तचंदन—कमल—नीलोत्पल—कुष्ठ—प्रियंगु—सुंठी—मुस्ता—आमलक—वचा—सर्षप—तगर—अगर—मुरा—मांसी—रुद्रद्व—ऋद्ध्य—उशीरादीन्क्षिपेत् । द्वितीये—पचामृत—गजमद—तीर्थोदक—सप्तधान्य—सुवर्णानिक्षिपेत् तृतीये गजाश्ववराहोत्खात । राजद्वाररथशालागोशालाचतुष्पथमृत्तिका क्षिपेत् । चतुर्थे मुक्ताप्रवालमाणिक्यवज्रेन्द्रनीलेतिपंचरत्नानि वटाश्वत्थपलाशप्लक्षोदुंबरपल्लवान् जंबूकदंबनिंबचिंचिकावटोदुंबरप्लक्षचूतमूलत्वचः सर्वकूप—जलानि च नि क्षिपेत् । मध्यगतशतच्छिद्रेच शतोषधयस्तदभावे विष्णुक्रांता सहदेवी तुलसी शतावरी कुशान् कुंकुमं च प्रक्षिप्य पूर्णपात्रनिधानांतं कृत्वा तत्रवस्त्रोपरि अष्टदलंविलिख्य तत्कर्णिकायां निष्कतदर्धं

सुवर्णनिर्मितांवानिर्ऋतिप्रतिमामग्न्युत्तारणपूर्वकं पंचामृतस्नापितां मोषुण इतिमंत्रेणसंस्थाप्य तद्दक्षिणतः इंद्रंवोइतींद्रंतदुत्तरतश्च । अप्सुमेइतिमंत्रेणजलप्रतिमांचस्थापयेत् । तद्यथा मोषुण इतिमंत्रस्य घोरः कृण्वो ऋषिर्निर्ऋतिर्देवतागायत्रीछंदः निर्ऋतिस्थापनेविनियोगः । ॐ मोषुणः परांपरानिर्ऋतिर्दुर्हणावधीत् ॥ पदीष्ट तृष्णयासह ॥ १ ॥ ॐ भूर्भुवः स्व भगवन्निर्ऋते इहागच्छ इहतिष्ठ इत्यावाह्य संस्थाप्य ध्यानंकुर्यात् । संस्मरे न्निर्ऋतिंश्यामंसुमुखंनरवाहनम् । रक्षोधिपंखड्गहस्तंदिव्याभरणभूषितम् ॥ १ ॥ इंद्रंवो इतिमंत्रस्यमधुच्छंदा ऋषिरिंद्रोदेवता गायत्रीछंदः इंद्रस्थापनेविनियोगः । ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः॥ अस्माकमस्तुके वल ॐ भूर्भुवः स्वः इंद्र इहागच्छ इहतिष्ठ इतिइंद्रंसंस्थाप्य तदुत्तरतः । अप्सुमेइतिमंत्रस्य मेधातिथिर्ऋषिरापो देवता अनुष्टुपछंदः अपांस्थापनेविनियोगः । ॐ अप्सुमेसोमोऽअब्रवीदन्तर्विश्वानिभेषजा । अग्निंचविश्वशं भुवमापश्चविश्वभेषजीः । ॐ भूर्भुवः स्वः आप इहागच्छत इहतिष्ठत इत्यपः स्थापयेत् । ततः प्रागादितश्च तुर्विंशतिषुदलेषु उत्तराषाढाद्यनुराधान्तनक्षत्राणामधिदेवताः स्थापयेत् तद्यथा ॐ भूर्भुवःस्वः विश्वेदेवा इ

हागच्छत इहतिष्ठत १ ॐ भूर्भुव स्व विष्णो इहागच्छ इहतिष्ठ २ ॐ भू० वसव इहागच्छत० ३ ॐ भू० वरुण
इहा० ४ ॐ भू० अजेकपादिहागच्छ० ५ ॐ भू० अहिर्बुध्न्यइहा० ६ ॐ भू० पूषन् इहा० ७ ॐ भू० अश्वि
नो इहागच्छत० ८ ॐ भू० यम इहा० ९ ॐ भू० अग्ने इहा० १० ॐ प्रजापते इहा० ११ ॐ भू० सोम इहा० १२
ॐ भू० रुद्र इहा० १३ ॐ भू० अदिते इहा० १४ ॐ भू० बृहस्पते इहा० १५ ॐ भू० सर्पा इहा० १६ ॐ भू०
पितर इहा० १७ ॐ भू० भग इहा० १८ ॐ भू० अर्यमन्निहा० १९ ॐ भू० सवितरिहागच्छ० २० ॐ भू०
त्वष्ट इहा० २१ ॐ भू० वायो इहा० २२ ॐ भू० इन्द्राग्नीइहा० २३ ॐ भूर्भुव स्व मित्र इहागच्छ इहतिष्ठ २४
इत्येतांस्तनोलोकपालांश्चतुर्थ्यंतनमोंतैर्नामभि क्रमेणावाह्य ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिम
न्तनोत्वरिष्टंयज्ञठंसमिमदधातु ॥३॥ विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठ।इतिप्रतिष्ठाप्य। ॐनिर्ऋतयेनम।
इति निर्ऋतिं०। ॐ इंद्रायनम। इतींद्रं०। ॐ अद्भ्योनम इत्यपश्च क्रमेणषोडशोपचारे संपूज्य। मंडलस्या
पिता विश्वेदेवा देवताश्चतुर्थ्यंतनमोंतैर्नामभि लोकपालेभ्योनम इतिलोकपालांश्च प्रत्येकंतंत्रेणपूजयेत्।
तत्रवस्त्रयुग्मम्॥ रक्तचंदनम्। कृष्णसुरभीणिपुष्पाणि। मेषशृंगस्यधूपः।आज्यस्यदीपः। पोलिकोदनादिपु

रुषाहारान्नंनैवेद्यं । ब्राह्मणानांसुरास्थाने सैंधवमिश्रंक्षीरं । मांसस्थानेलवणयुक्तंपायसं ।एतावन्नैवेद्यंचसमर्पये
त् । प्राक्कुंभेआशुःशिशानइत्यादित्रयोदशर्चं १३ दक्षिणकुंभेत्वमग्नेरुद्रइत्याद्यनुवाकं पश्चिमकुंभेलमग्नइत्या
दिसूक्तं उत्तरकुंभेरक्षोहणमितिपंचविंशर्चंचजपेत् । मध्यकुंभेत्र्यंबकमितिमंत्रमष्टोत्तरशतंपावमानंसूक्तंचसकृ
ज्जपेत् ततआचार्योरुद्रकुंभान्नैर्ऋत्येस्थंडिलेऽग्निंप्रतिष्ठाप्यतदीशान्यांनवग्रहमंडलेग्रहस्थापनंकृत्वासंपूजये
त् ११ ततःकुशकंडिकांकृत्वा क्रमेण पायसकृसरचरूञ्छ्रपयित्वा दक्षिणजान्वाच्याज्याहुतिंजुहोति ।
अग्नेरुत्तरभागे ॐ प्रजापतयेस्वाहा इदंप्रजापतयेनमम । अग्नेर्दक्षिणभागे ॐ इंद्राय० इदमिंद्राय० ।
इत्याघारौ । मध्ये समिद्धतमेवाज्यभागौ । ॐ अग्नये० इदं० । ॐ सोमाय० इदं० । ततोयजमानेनद्रव्य
त्यागःकार्यः । ततोऽऋत्विक्सहितआचार्योजुहुयात् । तद्यथा आदित्यादिनवग्रहान्क्रमेणार्कादिसमिच्चरुति
लाज्यद्रव्यैरष्टाष्टसंख्ययाहुत्वा पूर्वोक्तग्रहहोमद्रव्येण अधिप्रत्यधिदेवताश्चतुश्चतुःसंख्ययाहुत्वा विनायका
दिदिक्पालांतंक्रतुसंरक्षकदेवताःपलाशोदुंबरान्यतमसमिच्चरुतिलाज्यद्रव्येणद्विद्विसंख्ययाजुहोति । एवंग्रह
होमंकृत्वाप्रधानदेवनिर्ऋतये० इन्द्राय अद्भ्यश्च तत्तन्मंत्रेणसमिदाज्यतिलपायसकृसरद्रव्येणप्रत्येकमष्टोत्तर

शतमष्टाविंशतिसंख्यया वाजुहुयात्। तत्रमंत्राः। ॐमोषुण परापरानिर्ऋतिर्दुर्हणावधीत्।पदीष्टतृष्णयासहस्वा हा इदनिर्ऋतयेनम १०८।२८। ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्य ।अस्माकमस्तुकेवल स्वाहा इदमिं द्राय० १०८।२८। ॐ अप्सुमेसोमोऽअब्रवीदन्तर्विश्वानिभेपजा । अग्निंचविश्वशंभुवमापश्चविश्वभेपजी स्वाहा इदमग्न्य ०१०८।२८। ततोविश्वेदेवाद्याश्चतुर्विंशतिदेवता अष्टाष्टसंख्याभि पायसाहुतिभिर्जुहुयात्। ॐविश्वेभ्योदेवेभ्य स्वाहा इदविश्वेभ्योदेवेभ्योनमम ॥८॥ ॐविष्णवेस्वाहा इद० ८। ओंकार सर्वत्र । वसुभ्य स्वाहाइद० ८वरुणाय० इदं० ८अजेकपदेस्वाहाइद० ८अहिर्बुध्न्याय० इदं० ८पूष्णेस्वाहा इदं० ८अश्विभ्यां० इद० ८ यमाय० इद० ८ अग्नये० इदं० ८ प्रजापतये० इद० ८ सोमाय० इद० ८ रुद्राय० इदं० ८ अदितये० इदं० ८ बृहस्पतये० इदं० ८ सर्पेभ्य ० इदं० ८ पितृभ्य ० इदं० ८ भगाय० इदं० ८ अर्यम्णे० इद० ८ सवित्रे० इद० ८ त्वष्ट्रे० इद० ८ वायवे० इदं० ८ इन्द्राग्नीभ्यां० इदं० ८ मित्राय० इदं० ८ ॐ इद्राय० इदं ० ८ अग्नये० इदं० ८ यमाय० इद० ८ निर्ऋतयेस्वाहा इदं० ८ ॐ वरुणायस्वाहा इदंवरु

णाय० ८ ॐ वायवेस्वाहा इदं० ८ ॐ कुबेराय० इदं० ८ ॐ ईशानाय० इदं० ८ इति हुत्वावक्ष्यमाणर्ग्भिः
प्रत्यृचमष्टसंख्ययाकृसराहुतिंजुहुयात् । कृणुष्वेतिपंचदशर्चस्यगौतमवामदेवोऋषिः रक्षोहादेवता त्रिष्टुप्
छंदः कृसरहोमेविनियोगः ॥ॐ कृणुष्वपाजः॒ प्रसितिंनपृथ्वीय्याहिराजेवामंवा२ँइभेन॥तृष्वीमनुप्रसितिंद्रूणानो
स्तासिविध्यरक्षसस्तपिष्ठैः स्वाहा इदंरक्षोहणे०॥१॥ॐतवभ्रमासऽआशुयापतंत्यनुस्पृशधृषताशोशुचानः॥
तपूंष्यग्नेजुह्वापतंगानसंदितोविसृंजविष्वगुल्काः स्वाहा इदंरक्षो० ॥ २ ॥ प्रतिस्पशोविसृंजतूर्णितमोभवापायु
र्विशोऽअस्याऽअदंब्धः॥योनोदूरेऽअघशंᳯसोयोऽअन्त्यंग्नेमाकिष्टेव्यथिरादधर्षीत् स्वाहा इदं० ॥३॥ उदग्नेति
ष्ठप्रत्यातंनुष्वन्यंॱमित्रा२ँओषतात्तिग्महेते॥योनोअरातिंसमिधानचक्रेनीचातंधक्ष्यतसंनशुष्कम् स्वाहा इदं
रक्षोहणे०।४।ऊर्ध्वोभवप्रतिविद्ध्याद्ध्यस्मदाविष्कृणुष्वदैव्यांन्यग्ने॥अवस्थिरातंनुहियातुजूनांजामिमजामिं
प्रमृणीहिशत्रून् स्वाहा ॥ ५ ॥ इदंरक्षोहणे० । सतेजानातिसुमतिंयविष्ठयऽईवतेब्रह्मणेगातुमैरत्॥विश्वान्यस्मै

सुदिनानिरायोद्युम्नान्युर्योविदुरोऽअभिद्यौव स्वाहा ॥ ६ ॥ इदरक्षोहणे० । सेदग्नेऽअस्तुसुभग सुदानुर्यस्त्वा
नित्येनहविषायउक्थे ॥पिप्रीपतिस्वऽआयुपिदुरोणेविश्वेदस्मैसुदिनासासदिष्ठि स्वाहा इदं० ॥७॥ अर्चामि
तेसुमतिंघोष्यर्वाक्सन्तेवावाताजरतामियंगी ॥ स्वश्वास्त्वासुरथामर्जयेमास्मेक्षत्राणिधारयेरनुद्यून स्वाहा
इदं० ॥८॥ इहत्वाभूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनुद्यून ॥ क्रीळन्तस्त्वासुमनसःसपेमाभिद्युम्नातस्थि
वांसोजनानाम्स्वाहा ॥ ९॥ इद० । यस्त्वास्वश्वं सुहिरण्योऽअग्नऽउपयातिवसुमतारथेन॥ तस्यत्राताभवसि
तस्यसखायस्तऽआतिथ्यमानुषग्जुजोषत् स्वाहा इदं० ॥ १० ॥ महोरुजामिबंधुतावचोभिस्तन्मापितुर्गोत
मादन्वियाय॥ त्वनोऽअस्यवचसश्चिकिद्धिहोतर्यविष्ठसुक्रतोदमूना स्वाहा० इदं० ॥ ११ ॥ अस्वप्नजस्तर
णय सुशेवाऽअतन्द्रासोवृकाऽअश्रमिष्ठा ॥ तेपायवं सध्र्यञ्चोनिपद्याग्नेतवनःपान्त्वमूरस्वाहा इदं० ॥ १२ ॥
येपायवोमामतेयन्तेऽअग्नेपश्यन्तोऽअन्धंदुरितादरक्षन॥ ररक्षतान्त्सुकृतोविश्ववेदादिप्सन्तऽइद्रिपवोनाहदेभुः

स्वाहा इदंरक्षो० ॥१३॥ त्वयावयंसंधन्य १ स्त्वोतास्तवप्रणीतपश्यामवाजान्॥ उभाशंसासूदयसत्यतातेनुष्टु याकृणुह्यह्नयाणस्वाहा इदंर० ॥१४॥ अयातेऽअग्नेसमिधाविधेमप्रतिस्तोमंशस्यमानंगृभाय ॥दहाशसोरक्षसः पाह्य १ स्मान्द्रुहोनिदोमित्रमहोऽअवद्यात् स्वाहा इदंरक्षोहणे० ॥ १५ ॥ ततः गायत्र्याविश्वामित्रऋषिर्गा यत्रीछन्दः सवितादेवता कृसरहोमे विनियोगः ॐ तत्सवितुर्वरेण्यं० स्वाहा इदंसवित्रे० ॥८॥ जातवेदसे इति मन्त्रस्यकश्यपऋषिः दुर्गादेवता त्रिष्टुप्छन्दः कृसरहोमेविनियोगः ॐ जातवेदसेसुनवामसोममरातीयतो निर्दहातिवेदः । सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निःस्वाहा इदंदुर्गायै ॥८॥ त्र्यम्बकमितिमन्त्र स्यवशिष्ठऋषिः रुद्रोदेवता अनुष्टुप्छन्दः कृसरहोमेविनियोगः ॐ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्ध नम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्स्वाहा इदंत्र्यम्बकाय ॥ ८ ॥ सीरायुंजंतीतिमन्त्रस्य बुधऋषिः ऋत्विक्स्तुतिर्देवता गायत्रीछन्दः कृसरहोमेविनियोगः ॐ सीरायुंजंतिकवयोयुगावितन्व तेपृथक् ॥ धीरादेवेषुसुम्नयास्वाहा इदं ऋत्विक्स्तुतये ॥ ८ ॥ तामग्निवर्णामितिमंत्रस्यसौभरिःऋषिर्दुर्गादे

वतात्रिष्टुप्छंद कृसरहोमेविनियोग । ॐ तामग्निवर्णांतपसाज्वलंतीं वैरोचनींकर्मफलेषुजुष्टां ॥ दुर्गांदेवींशर
णुप्रपद्यामहेऽसुरान्नाशयित्र्यैतेस्वाहा इदंदुर्गायैनम ॥ ८ ॥ वास्तोष्पतेइतिमंत्रस्यवशिष्ठऋषिर्वास्तोष्पतिर्दे
वतात्रिष्टुप्छंद कृसरहोमेविनियोग । ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेम
हेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदेस्वाहा इदंवास्तोष्पतये० ॥ ८ ॥ अग्नेनयइतिमंत्रस्यअगस्त्यऋ
पिरग्निर्देवतात्रिष्टुप्छद कृसरहोमेविनियोगः । ॐ अग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् ॥
युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेमस्वाहा । इदमग्नये० ॥ ८ ॥ क्षेत्रस्येतिमंत्रस्यवामदेव
ऋषि क्षेत्रपालोदेवताऽनुष्टुप्छद कृसरहोमेविनियोगः । ॐ क्षेत्रस्यपतिनावयंहितेनेवजयामसि ॥ गामश्वं
पोषयित्न्वासनोमृळातीदृशेस्वाहा इदंक्षेत्रस्यपतये० ॥ ८ ॥ गृणानाजमदग्निनाइतिमंत्रस्य जमदग्निर्ऋषि
र्मित्रावरुणौदेवते गायत्रीछंद कृसरहोमेविनियोग । ॐ गृणानाजमदग्निनायोनावृतस्यसीदतम् ॥ पातंसोमं
मृतावृधास्वाहा इदंमित्रावरुणाभ्यां० ॥ ८ ॥ अग्निरिवमितिमंत्रस्यकाण्वोमेधातिथिर्ऋषिरग्निर्देवता गायत्री

छंदः कृसरहोमेविनियोगः । ॐ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे॥ देवाँऽआसादयादिहस्वाहा इदमग्नये०
॥ ८ ॥ ततः समिदाज्यचरुहोमः।हिरण्यवर्णामितिपंचदशर्चस्यकर्दमानंदचिक्लितोंदिरासुताऋषयः श्रीर्देवता
आद्यास्तिस्रोऽनुष्टुभः तुर्याप्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभावंत्याप्रस्तारपंक्तिः प्रत्यृचंसमि
दाज्यचरुहोमेविनियोगः । हिरण्यवर्णांहरिणीत्यादिपंचदशर्ग्भिःप्रतिमंत्रमष्टसंख्याभिः समिदाज्यचर्वा
हुतयः।सर्वत्रइदंलक्ष्म्यैनममइतित्यागः।ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजां॥ चन्द्रांहिरण्मयींलक्ष्मींजातवे
दोमआवहस्वाहा इदंलक्ष्म्यै॥१॥तांमआवहजातवेदोलक्ष्मीमनपगामिनीं॥यस्यांहिरण्यंविन्देयंगामश्वंपुरुषा
नहं० ॥ २ ॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीं ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां० ॥ ३ ॥ कांसो
स्मितांहिरण्यप्राकारामार्द्रांज्वलन्तींतृप्तांतर्पयन्तीं ॥ पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियं० ॥ ४ ॥ चन्द्रांप्र
भासांयशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदारां॥तांपद्मिनीमीशरणंप्रपद्येऽअलक्ष्मीर्मेनश्यतांत्वांवृणे० ।१।५।
आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदन्तुमायान्तरायाश्चबाह्याअ

लक्ष्मी ॥ ६ ॥ उपैतुमांदेवसुख कीर्तिश्चमणिनासह ॥ प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे० ॥ ७ ॥
क्षुत्पिपासामलाज्येष्ठामलक्ष्मींनाशयाम्यहं ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात्० ॥ ८ ॥ गंधद्वारांदुराध
र्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं० ॥ ९ ॥ मनस कामुमाकूतवाचःसत्यमशी
महि ॥ पशुनांरूपमन्नस्यमयिश्री श्रयतांयशः ० २ ॥ १० ॥ कर्दमेनप्रजाभुतामयिसंभवकर्दम ॥ श्रियंवासय
मेकुलेमातरंपद्ममालिनीं० ॥ ११ ॥ आप स्रजन्तुस्निग्धानिचिक्लीतवसमेगृहे ॥ निचंदेवींमातरश्रियंवासय
मेकुले० ॥ १२ ॥ आर्द्रांपुष्करिणींपुष्टिंपिंगलांपद्ममालिनीं॥चन्द्रांहिरण्मयींलक्ष्मींजातवेदोमआवह॥१३॥
आर्द्रांय करिणींयष्टिंसुवर्णांहेममालिनीं॥सुर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह० ॥ १४ ॥ तांमआवहजा
तवेदोलक्ष्मीमनपगामिनीं ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विन्देयंपुरुषानहं० ३ ॥ १५ ॥ य शुचि
प्रयतोभुत्वाजुहुयादाज्यमन्वहं ॥ सूक्तंपंचदशर्चंचश्रीकामः सततंजपेत् स्वाहाइदंलक्ष्म्यै ॥ १६ ॥ ततः
पायसहोम ॥ त्वन्न सोमेतिप्रगाथऋषि सोमोदेवता त्रिष्टुपछंदः पायसहोमेविनियोगः ॐ त्वन्नःसोमवि

श्वतोंगोपाऽअदाभ्योभवसेर्धराजन्नपुस्रिधोविवोमदेमानोंदुःशंसऽईशताविर्वक्षसेस्वाहा इदंसोमाय० ॥ १२ ॥
ॐ त्वनंःसोमसुक्रतुर्वयोधेयांयजागृहि ॥ क्षेत्रवित्तरोमनुषोविवोमदेंद्रुहोनंःपाह्यंहंसोविर्वक्षसे स्वाहा इदंसो
माय० इतिवा ॥ १३ ॥ ततश्चतुर्गृहीताज्यंजुहुयात् । यातेरुद्रेतिकश्यपऋषिः रुद्रःस्वराड्देवता अनुष्टुप्छंद
श्चतुर्गृहीताज्यहोमेविनियोगः । ॐ यातेंरुद्राशिवातनूरघोरापापकाशिनी ॥ तयांनस्तन्वाशन्तंमयागिरिंशन्ता
भिचाकशीहि स्वाहाइदंरुद्राय० ॥ ३२ ॥ ततः स्रुवेणाज्याहुतिः । सप्तमहाव्याहृतीनांविश्वामित्रादयोऋषयो
ऽग्न्यादयोदेवताः गायत्र्यादीनिछंदांसि आज्यहोमेविनियोगः । ॐ भूःस्वाहा इदमग्नये ॥ १ ॥ ॐ भुवः
स्वाहा इदंवायवे० ॥ २ ॥ ॐ स्वःस्वाहा इदंसूर्याय० ॥ ३ ॥ ॐ भूर्भुवःस्वःस्वाहा इदंप्रजापतये० ॥ ४ ॥
इतिव्यस्तसमस्तव्याहृतिभिराज्यंहुत्वास्विष्टकृदादिप्रायश्चित्तहोमांतंकुर्यात् । ततोदिक्पालेभ्योनवग्रहेभ्यो
विनायकादिभ्योनिर्ऋतये इंद्राय अद्भ्यो रुद्राय क्षेत्रपालाय सदीपमाषभक्तबलीन् दद्यात् । तत आचार्योयज
मानोवा समुद्रादूर्मिरित्यादिपूर्वोक्तपूर्णाहुतिंजुहुयात् । ततः प्रणीतानिनयनादिकर्मशेषंसमाप्य रुद्रकुंभंद
क्षिणतःस्पृष्ट्वा त्र्यंबकमितिशतवारंजपेत् । रुद्राध्यायंचमकाध्यायंचपठेत् । ततोरुद्रंनिर्ऋतिंचपंचोपचारैः

संपूज्य । ॐ त्र्यंबकंयजामहे० ॐत्र्यंबकायनम । ॐ मोषुणु परापरानिर्ऋतिर्दुर्हणावधी त्॥ पदीष्टतृष्णया
सह ॐ निर्ऋतयेनम । इत्युपस्थाय सर्वकलशोदकंपात्रांतरेगृहीत्वासलिंगाचार्योयजमानं सर्वौषधीभिरनु
लिप्तांग धृतनववस्त्र तद्वामतोधृतनववस्त्रांसपुत्रातत्पत्नीसुपवेश्य वक्ष्यमाणमंत्रैरभिषिंचेत् तेच । अक्षीभ्यामि
तिषण्णांमंत्राणांकश्यपोऋषिर्विवृहायक्ष्मनाशनोदेवताअनुष्टुपछंद अभिषेकेविनियोग । ॐ अक्षीभ्यां तेना
सिकाभ्यांकर्णाभ्यांछुबुकादधि ॥ यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते ॥ १ ॥ ग्रीवाभ्यस्तउष्णिहा
भ्यः कीकसाभ्योऽअनुक्यात् ॥यक्ष्मंदोषण्यंमंसाभ्यांबाहुभ्यांविवृहामिते ॥ २ ॥ आंत्रेभ्यस्तेगुदाभ्योव
निष्ठोर्हृदयादधि ॥ यक्ष्ममतस्नाभ्यांयक्नः प्लाशिभ्योविवृहामिते ॥ ३ ॥ ऊरुभ्यां तेअष्ठीवद्भ्यांपार्ष्णिभ्यांप्रप
दाभ्यां ॥ यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते ॥ ४ ॥ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः ॥ यक्ष्मं
सर्वस्मादात्मनस्तमिदंविवृहामिते ॥ ५ ॥ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि॥ यक्ष्मंसर्वस्मादात्म
नस्तमिदंविवृहामिते ॥ ६ ॥त्रिभिर्देवेतिससानांमंत्राणांवसिष्ठऋषिः आपानामप्याणामभिर्देवता [illegible]

[illegible] विनियोगः ।

विश्वेदेवादेवताआद्यागायत्री द्वितीयानुष्टुप्छंदांसि ततास्तिस्रोगायत्र्योंत्येद्वेअनुष्टुभौ अभिषेकेविनियोगः ॥
७ । २ । १८ । ॐ त्रिभिष्ट्वंदेवसवितर्वर्षिष्ठैःसोमधामभिः॥अग्नेदक्षैःपुनीहिनः॥१॥ पुनंतुमांदेवजनाःपुनन्तुवसं
वोधिया।विश्वेदेवाःपुनीतमाजातवेदःपुनीहिमां॥२।प्रप्यायस्वप्रस्यन्दस्वसोमविश्वेभिरंशुभिः।देवेभ्यंऽउत्तमंह
विः॥३॥उपप्रियंपनिप्नतंयुवानमाहुतीवृधम्।अगन्मबिभ्रतोनमः॥४॥अलाय्यस्यपरशुर्ननाशतमापवस्वदेवसो
म।आखुंचिंदेवदेवसोम॥५॥यःपावमानीरध्येत्यृषिभिःसंभृतंरसम्॥सर्वंसपूतमश्नातिस्वदितंमातरिश्वना॥६
पावमानीर्योअध्येत्यृषिभिःसंभृतंरसम्॥तस्मैसरस्वतीदुहेक्षीरंसर्पिर्मधूदकम् ॥ ७॥ आपोहिष्ठेतिनवर्चस्यां
बरीषःसिंधुद्वीपआपोगायत्री अंत्येद्वेअनुष्टुभौ पंचमीवर्द्धमाना सप्तमीप्रतिष्ठा अभिषेकेविनियोगः
७ । ६ । ५ । ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातनः । महेरणायचक्षसे॥१॥योवःशिवतमोरसस्तस्यभाज
यतेहनः । उशतीरिवमातरः ॥ २॥ तस्माऽअरंङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥३॥ शंनो
देवीरभिष्टयऽआपोभवन्तुपीतये । शंयोरभिस्रवंतुनः ॥ ४ ॥ ईशानावार्याणांक्षयन्तीश्चर्षणीनाम् । अपोयांचा

भेषजम्॥५॥अप्सुमेसोमोऽअब्रवीदन्तर्विश्वानिभेषजा॥अग्निंचविश्वशम्भुवम्॥६॥ आपः पृणीतभेषजंवरू
थंतन्वे३ मम। ज्योक्चसूर्यंदृशे॥७॥इदमापः प्रवहतयत्किंचदुरितंमयि॥यद्वाहमभिदुद्रोहयद्वाशेपउतानृत
म्॥८॥आपोऽअद्यान्वचारिषंरसेनसमगस्महि॥ पयस्वानग्नऽआगहितंमासंसृजवर्चसा॥९॥ आपइद्वाइतिमं
त्रद्वयस्यसमर्पयोऽनुपयाविश्वेदेवादेवताअनुष्टुप्छंद अभिषेकेविनियोग ॥ ८। ७। २५। ॐआपइद्वाउभे
षजीरापोअमीवचातनी॥आपः सर्वस्यभेषजीस्तास्तेकृण्वन्तुभेषजम्॥ १ ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावा
चः पुरोगवी॥अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि॥२॥सहस्राक्षेणेतिमंत्रस्यप्राजापत्यऋषिर्यक्ष्मनाश
नोयक्ष्महादेवतात्रिष्टुप्छंद अभिषेकेविनियोग ८।८।१९। ॐ सहस्राक्षेणशतशारदेनशतायुषाहविषाहार्ष
मेनम्॥ शतंयथेमंशरदोनयातीन्द्रोविश्वस्यदुरितस्यपारम्॥ १ ॥ शतंजीवशरदोवर्धमान शतंहेमंताञ्छतमु
वसन्तान्।शतमिन्द्राग्नीसवितावृहस्पतिःशतायुषाहविषेमंपुनर्दुः॥ २ ॥ आहार्षमविदंत्वापुनरागाःपुनर्नव॥

सर्वाङ्गसर्वंतेचक्षुःसर्वमायुश्चतेविदम् ॥ ३ ॥ ॐ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥
सर्वाङ्गसर्वंतेचक्षुःसर्वमायुश्चतेविदम् ॥ ३ ॥ ॐ देवस्यंत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥
सरस्वत्यैवाचोयन्तुर्यन्त्रियैदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिंचाम्यसौ ॥ १ ॥ देवस्यंत्वा० सरस्वत्यैवा
चोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिंश्चामि ॥ २ ॥ देवस्यंत्वा० अश्विनोर्भैषज्येनतेजसेब्रह्मवर्च्चसायाभिषिं
श्चामि । सरस्वत्यैभैषज्येनवीर्यायान्नाद्यायाभिषिंश्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेऽभिषिंश्चामि ॥ ३॥
यज्जाग्रतेतिषण्णांशिवसंकल्पमंत्राणांप्रजापतिर्मनस्त्रिष्टुप्छंदः अभिषेकेविनियोगः । ॐ यज्जाग्रतोदूरमुदैति
दैवंतदुसुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकंतन्मेमनःशिवसंकल्पमस्तु ॥ १ ॥ येनकर्माण्यपसो
मनीषिणोयज्ञेकृण्वन्तिविदथेषुधीराः ॥ यदपूर्वंयक्षमन्तःप्रजानांतन्मेमनःशिवसंकल्पमस्तु ॥ २ ॥ यत्प्रज्ञा
नमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतंप्रजासु । यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मेमनःशिवसंकल्पमस्तु ॥ ३ ॥
येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वम् ॥ येनयज्ञस्तायतेसप्तहोतातन्मेमनःशिवसंकल्पमस्तु ॥ ४ ॥

यस्मिन्नृच साम यजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ॥ यस्मिँश्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ॥ हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥ ॐ योऽसौ वज्रधरो देवो महेंद्रो गजवाहनः ॥ मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥ १ ॥ योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः ॥ सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥ २ ॥ योऽसौ दंडधरो देवो धर्मो महिषवाहनः ॥ मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥ ३ ॥ योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ॥ प्रशामयतु मूलोत्थदोषं गंडांतसंभवम् ॥ ४ ॥ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ॥ नक्रवाहः प्रचेताख्यो मूलोत्थाघं व्यपोहतु ॥ ५ ॥ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ॥ प्रशामयतु मूलोत्थदोषं बालस्य शांतिदः ॥ ६ ॥ योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः ॥ मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥ ७ ॥ योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ॥ आश्लेषामूलगंडांतदोषमाशु व्यपोहतु ॥ ८ ॥ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ॥ सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः ॥ ९ ॥ सुरास्त्वामभिषिंचंत्वित्यादिभिः पूर्वोक्तैश्चाभिषिच्य मातरि [illegible]

पितोयजमानोधौतेवाससीधृत्वातिलकंकृत्वासापत्यकलत्रःकांस्यपात्रस्थाज्यं ॐ रूपंरूपम्प्रतिरूपोबभूव तदस्यरूपम्प्रतिचक्षणाय । इन्द्रोमायाभिःपुरुरूपऽएतेयुक्ताह्यस्यहरयःशतादशोत्ययंवैहरयोयंवैदशचस हस्राणिबहूनिचनन्तातदेतद्ब्रह्मपूर्वमनमवाह्यजमनुःसर्वानुशासनम् १ इतिमंत्रेणावेक्ष्यविप्रायदत्त्वाआचा र्यादीन्संपूज्यआचार्यायसवत्सांधेनुं ब्रह्मणेवृषभंरुद्रजापिनेकृष्णमनड्वाहंधेन्वाद्यलाभेतत्तन्मूल्यंवादत्त्वास्व शक्त्याऋत्विग्भ्योयथाशक्तिदक्षिणांभूयसींचदत्त्वानिर्ऋत्यादीनामुत्तरपूजांविधायउत्तिष्ठ० यांतुदेव० इति विसृज्य आचार्यायनिर्ऋतिप्रतिमाकुंभादि रुद्रजापिनेरुद्रप्रतिमाकुंभादि संकल्पपूर्वकंप्रतिपाद्य अग्निंसंपू ज्यगच्छगच्छेतिविसृज्यशतंतदर्द्धंदशवाब्राह्मणान्भोजयित्वाशांतिसूक्तजपंकारयित्वा यस्यस्मृत्येतिकर्मंपू र्णतांवाचयित्वाकर्मेश्वरार्पणंकृत्वाससुहृदोभुंजित । एवंयःकुरुतेशांतिंशौनकोक्तप्रमाणतः । तदनिष्टंतुसकलं सद्यएवविनश्यति १ इतिश्रीगौडवंशावतंसपण्डितवैद्यश्रीचतुर्थीलाल(चौथमल)विरचितेशान्तिप्रकाशेशौनको क्तमूलशांतिप्रयोगःसमाप्तः ॥ अथमूलशांतिकर्मोपकरणानि ॥ स्वर्णमयीरुद्रप्रतिमा १ स्वर्णमयनिर्ऋतिजलं

द्रप्रतिमास्तत्र ३ चंदनं रक्तचंदनं केशरं अगरु कर्पूरं पुष्पाणि पुष्पमाला धूप दीपवर्त्तिका मोदका
दिनैवेद्यं पूगीफलानि तांबूलानि ऋतुफलानि यज्ञोपवीतानि ताम्रकलश १ मृन्मया कलशा ६ शतच्छि
द्रकलश १ नारिकेलानि ७ विल्वपत्राणि गंगोदकं दुग्धं दधि मधु गोमूत्रं गोमयं श्वेतवस्त्रं रक्तवस्त्रं
कृष्णवस्त्रं कौशेयवस्त्रं आचार्यादिवरणोपकरणानि श्वेतसर्षपा पंचरजांसि अश्वत्थवटप्लक्षपलाशाम्रोदुं
बराणांपल्लवा । गजाश्वरथ्यवल्मीकह्रदगोकुलराजद्वारमृद । पंचरत्नानि । सर्वौषधी । अर्कपलाशख
दिरापामार्गपिप्पलौदुंवरशमिदूर्वाकुशाग्रहसमिध । सर्वकूपजलानि । श्वंद्रोदकम् । शतोपधय मयूर
शिखा ॥ १ ॥ विष्णुक्रांता ॥ २ ॥ सहदेवी ॥ ३ ॥ पुनर्नवा ॥ ४ ॥ सरपुंखा ॥ ५ ॥ वाराहिकंद ॥ ६ ॥ काग
जंघा ॥ ७ ॥ लक्ष्मणा ॥ ८ ॥ तुविका ॥ ९ ॥ वदरीपत्रा ॥ १० ॥ कर्पूरी ॥ ११ ॥ करेला ॥ १२ ॥ कर्को
टिका ॥ १३ ॥ चक्रांका ॥ १४ ॥ श्वेतार्का ॥ १५ ॥ व्याघ्रपत्रिका ॥ १६ ॥ रुदंती ॥ १७ ॥ अश्वगंधा ॥ १८ ॥
मुसली ॥ १९ ॥ गिरिकर्णिका ॥ २० ॥ इंद्रवारुणी ॥ २१ ॥ अपामार्ग ॥ २२ ॥ शंखपुष्पी ॥ २३ ॥ कुंवार
पाठा ॥ २४ ॥ शल्लकी ॥ २५ ॥ गंधप्रसारणी ॥ २६ ॥ निर्गुंडी ॥ २७ ॥ देवदाली ॥ २८ ॥ वट ॥ २९ ॥

शमी ॥ ३० ॥ प्लक्ष ॥ ३१ ॥ पलाश ॥ ३२ ॥ अश्वत्थ ॥ ३३ ॥ आम्र ॥ ३४ ॥ उदुंबर ॥ ३५ ॥ जांबून॥ ३६ ॥
धनबहेरा ॥ ३७ ॥ वेतस ॥ ३८ ॥ नागकेशर ॥ ३९ ॥ अर्जुनवृक्ष ॥ ४० ॥ अशोक ॥ ४१ ॥ बकुल ॥ ४२ ॥
पाषाणभेद ॥ ४३ ॥ शाल ॥ ४४ ॥ तमाल ॥ ४५ ॥ ताल ॥ ४६ ॥ पाटला ॥ ४७ ॥ सेवती ॥ ४८ ॥ महुवा
॥ ४९ ॥ शिरष ॥ ५० ॥ बिल्व ॥ ५१ ॥ दोनों कँटाई ॥ ५२ ॥ ५३ ॥ खरेंटी ॥ ५४ ॥ अतिबला ॥ ५५ ॥
पाठ ॥ ५६ ॥ नागबला ॥ ५७ ॥ जावत्री ॥ ५८॥ बकुल ॥ ५९ ॥ केतकी ॥ ६७ ॥ कदली ॥ ६१ ॥ बिजोरा
॥ ६२ ॥ अरणी ॥ ६२ ॥ अजवाण ॥ ६४ ॥ पुंड्रिका ॥ ६५ ॥ द्रोणपुष्पी ॥ ६६ ॥ कुंभी ॥ ६७ ॥ श्रीपर्णी
॥ ६८ ॥ मदन ॥ ६९ ॥ चंपक ॥ ७० ॥ पद्माक॥ ७१ ॥ स्वर्णपुष्पी ॥ ७२ ॥ सिद्धेश्वरी ॥ ७३ ॥ बदरी॥७४॥
किरमाला ॥ ७५ ॥ धव ७६ ॥ कुंद ॥ ७७ ॥ मुचुकुंद ॥ ७८ ॥ गोभी ॥ ७९ ॥ क्षरकंदुका ॥ ८० ॥ दाडिम
॥ ८१ ॥ अम्लवेती ॥ ८२ ॥ ब्राह्मी ॥ ८३ ॥ आमली ॥ ८४ ॥ भृंगराज ॥ ८५ ॥ अधोपुष्पी ॥ ८६ ॥
मीनाक्षी ॥ ८७ ॥ वासा ॥ ८८ ॥ तरंगिणी ॥ ८९ ॥ गुडूची ॥ ९० ॥ हलदी ॥ ९१ ॥ शतावरी ॥ ९२ ॥
बावची ॥ ९३ ॥ काकजंघा ॥ ९४ ॥ वनतुलसी ॥ ९५ ॥ तुलसी ॥ ९६ ॥ कुशा ॥ ९७ ॥ कांश ॥ ९८ ॥ इक्षु

मूल ॥ ९९ ॥ सर्पपमूल ॥ १०० ॥ एपामलाभेयथालाभसद्वृक्षाणांपत्राणि । गजमद–देवदारु–कमलपुष्प–
नीलोत्पल–कूट–प्रियगु–सूंठ–नागरमोथ–आंवला–वच–तगर–मुरा–जटामांसी–ऋद्धिवृद्धी–उशीर–सप्त
धान्य–मुक्ताप्रवालमाणिक्यवज्रेंद्रनोलेतिपचरत्नानि । जंबूकदबनिंबचिंचिणीवटोदुंबरप्लक्षाम्रमूलत्वचः ।
कृष्णपुष्पाणि मेपशृग । मुरास्थाने सैंधवमिश्रक्षीरं । मांसस्थानेलवणयुतपायस । कृसर । तिल–
यव–चावल–घृत–शर्करा–मुगधिकपदार्थ । पायस । मुद्रा माषा । गुड । सिंदूरं–कज्जलं–रक्तसूत्र–
कांस्यपात्राणि ॥ ४ ॥ आज्यस्थाली १ चरुस्थाली १ प्रणीता १ प्रोक्षणी १ पूर्णपात्र १ छायापात्रं १ स्रुव
र्णम्–आचार्यायसवत्साधेनु १ ब्रह्मणेवृषभ १ रुद्रजापिने कृष्णमनड्वाह १ तत्तन्मल्यंवा–बलिसामग्रीमाष
भक्तपूरिकादि । ताम्रस्थाली १ अर्घ्यपात्र १ द्राक्षा आर्द्रकं पलाशपत्रावली मृन्मयानिशरावाणि ५०
सामिध । गुग्गुलु । पलाशसमिध । भूयसीदक्षिणा–ताम्रदक्षिणा । रजतदक्षिणा । स्वर्णदक्षिणा । तिल
तैलकृष्णवस्त्रलोहअन्नवस्त्रवालकमूल्यादीनिदानानियथाशक्तिब्राह्मणभोजनमितिमूलशांत्युपकरणानि ॥
अथ आश्लेपाशांतिप्रयोग ॥ कश्यप – आश्लेषायाआद्यपादे शुभः द्वितीयेपादेधनस्यनाशः तृतीयेमातुः

चतुर्थेपितुः । आश्लेषांत्यपादत्रयजाताकन्याश्वश्रूंहंति । आश्लेषासर्वपादेषुशांतिःकार्याप्रयत्नतः ॥ जातस्य द्वादशाहेतुशांतिकर्मसमाचरेत् ॥ १ ॥ असंभवेतुजन्मर्क्षेह्यन्यस्मिन्वाशुभेदिने ॥ यथोक्तकालेगोमुखप्रसवं कृत्वा यजमानः कृताभ्यंगोदेशकालौसंकीर्त्य । अस्यबालकस्य आश्लेषाजननसूचितपित्रादिसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थमाश्लेषाजननशांतिं करिष्ये । इति संकल्प्य । तदंगतयागणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यवरणानिपूर्वोक्तवत्कुर्यात् ॥ ततः ऋत्विजश्चाष्टौचत्वारोवा । ततः आचार्यः । अस्मिन्कर्मणि आचार्यकर्मकरिष्ये । इति संकल्प्य । यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा । स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ इतिसर्षपान्विकीर्य । आपोहिष्ठेतिमंत्रैःकर्मभूमिं प्रोक्ष्य ईशानदेशेपंचवर्णैःस्वस्तिकंविरच्यतत्रव्रीहयोद्रोणप्रमाणाःप्रक्षिप्य । तदुपरिमूलशांत्युक्तप्रयोगेण रुद्रकलशं संस्थाप्य । तत्र आपोहिष्ठेति ऋचेनपंचगव्यंनिक्षिपेत् । तत्र पूर्णपात्रोपरिस्थवस्त्रेसौवर्णींरुद्रप्रतिमांसंस्थाप्य ॐ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भूर्भुवःस्वः रुद्रइहागच्छ इहतिष्ठ इति रुद्रमावाह्य षोडशोपचारैःपूजयेत् । ततः एकऋत्विक्कुंभंस्पृष्ट्वा नमस्तेरुद्रइतिरुद्राध्यायं

वानश्चमेशात नमकाध्यायच जपेत् । तत रुद्रकुभात्प्रागुदग्वा चतुर्विंशद्दलपंकजंपंचवर्णैस्तंडुलै कृत्वा
तत्रकर्णिकायांप्राग्वत्कुभंसंस्थाप्य तच्चतुर्दिक्षुचतुरःकलशान्स्थापयित्वा पूर्णपात्रनिधानांतकृत्वा सर्वत्रव
रुणमावाह्यसंपूजयेत् ( प्रतिकलशमंत्रावृत्ति ) पंचकुभासंभवेचतु प्रस्रवणपंचवक्त्रकुंभंस्थापयित्वा सर्वतत्रैव
कुर्यात् । तत्रप्राक्कुभेतु देवदारुरक्तचंदनकमलनीलोत्पलकुष्ठप्रियंगुशुंठीमुस्ताआमलकवचासर्षप
तगरअगरमुरामांसीऋद्धिवृद्धीउशीरादीनिक्षिपेत् । दक्षिणकुभे पंचामृतगजमदतीर्थोदकसप्तधान्य
सुवर्णादीनिक्षिपेत् । पश्चिमकुभे गजाश्ववराहोत्खातमृत्तिकाराजद्वाररथशालागोशालाचतुष्पथमृत्तिकाश्च
क्षिपेत् । उत्तरकुंभे मुक्ताप्रवालमाणिक्यवज्रेंद्रनीलेतिपचरत्नानि वटाश्वत्थपलाशप्लक्षोदुंबरपल्लवान् जंबूकदं
बनिंबचिंचिणीवटोदुंबरप्लक्षाम्रमूलत्वच सर्वकूपजलानि च नि क्षिपेत् । मध्यगते शतच्छिद्रकुंभे शतौषधय
स्तदभावे यथालाभसद्वृक्षाणांपल्लवानि विष्णुक्रांता सहदेवी तुलसी शतावरी कुशकुंकुमानि च प्रक्षिपेत् । ततो
मध्यकुंभोपरि वस्त्रप्रसार्य अष्टदलवितत्य तत्रस्वर्णमयींसर्पप्रतिमां आश्लेषाधिदेवतां अग्न्युत्तारणपूर्वकंपं
चामृतस्नापितां नमोस्तुसर्पेभ्य इति मंत्रेणस्थापयेत् । ॐ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥ येऽअन्तरि

क्षयेदिवितेभ्यः सर्पेभ्योनमः ॥ ततः । सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवर्णकः । फलकासिधरस्तीक्ष्णोदिव्या
भरणभूषितः ॥ इतिसर्पंध्यात्वा ॐभूर्भुवःस्वः सर्पइहागच्छ इहतिष्ठ इत्यावाहयेत् । ततः तद्दक्षिणेस्वर्णप्रति
मायां पुष्यदेवतांबृहस्पतिम् । उत्तरतश्चान्यप्रतिमायांमघादेवताःपितृंश्चावाहयेत् । ॐ बृहस्पतेऽअतियद
र्य्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ॐभूर्भुवः
स्वः बृहस्पतेइहागच्छ इहतिष्ठ ॥ १ ॥ ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः॥असुंयऽई
युरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॐभूर्भुवःस्वः पितरइहागच्छन्तु इहतिष्ठन्तु ॥ २ ॥ इत्यावाह्य प्रा
गादितश्चतुर्विंशतिपंकजदलेषुपूर्वमारभ्यपुनर्वसुपर्यंतंनक्षत्राणितद्देवताआवाहयेत् । यथा । ॐ भूर्भुवःस्वः
भग इहागच्छ इहतिष्ठ ॥ १ ॥ ॐभू० अर्यमन्निहा० ॥ २ ॥ ॐभू० सवितरिहा० ॥ ३ ॥ ॐ भू० त्वष्टइहा०
॥ ४ ॥ भू०वायो इहा० ॥ ५ ॥ भू०इंद्राग्नीइहा० ॥ ६ ॥ भू०मित्र इहा० ॥ ७ ॥ भू०इंद्र इहा० ॥ ८ ॥ भू०
निर्ऋते इहा० ॥ ९ ॥ भू०आप इहा० ॥ १० ॥ भू०विश्वेदेवा इहा० ॥ ११ ॥ भू०विष्णो इहा० ॥ १२ ॥ भू०

वसव इहा० ॥ १३ ॥ भू०वरुण इहा० ॥ १४ ॥ भू०अजेकपादिहा० ॥ १५ ॥ भू०अहिर्बुध्न्य इहा० ॥ १६ ॥
भू०पूषन्निहा० ॥ १७ ॥ भू०अश्विनौ इहा० ॥ १८ ॥ भू०यम इहा० ॥ १९ ॥ ॐभू०अग्ने इहा० ॥ २० ॥भू०
प्रजापते इहा० ॥२१॥ भू०सोम इहा० ॥२२॥ भू०रुद्र इहा० ॥२३॥ ॐभूर्भुव स्व अदिते इहागच्छ इहतिष्ठ
॥२४॥इत्यावाह्य ॐभू०इन्द्र इहागच्छ इहतिष्ठ १ भू० अग्ने इहा० २ भू०यम इहा० ३ भू०निर्ऋते इहा० ४
भू०वरुण इहा० ५ भू०वायो इहा० ६ भू०कुबेर इहा० ७ भूर्भुव स्व ईशान इहागच्छ इहतिष्ठ० इतिलोक
पालानावाह्य।ॐ मनोजुतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳ समिमन्दधातु॥ विश्वेदेवासꣳ
इहमादयन्तामोम्प्रतिष्ठ ॥ इति प्रतिष्ठाप्य। ॐ सर्पेभ्योनम इतिसर्पान्। ॐ आश्लेषायै नम इत्याश्लेषाम्।
ॐ बृहस्पतये नम इति बृहस्पतिम् । ॐ पितृभ्योनम इति पितॄन् । ॐ भगाद्यावाहितदेवताभ्योनम
इति भगादीन् । ॐ लोकपालेभ्योनम इतिलोकपालांश्च षोडशोपचारै संपूजयेत् ॥ अत्र प्राक्कुंभे आशुः
शिशान इत्यादित्रयोदशर्चं १३ दक्षिणकुंभे त्वमग्नेरुद्रइत्याद्यनुवाकं पश्चिमकुंभे त्वमग्नइत्यादिसूक्तं उत्तर
कुंभे रक्षोहणमितिपंचविंशर्चं च जपेत् । मध्यकुंभे त्र्यंबकमितिमंत्राष्टोत्तरशतं पावमानं सूक्तं च सकूष्मा

पेत् । ततःआचार्योरुद्रकुंभान्नैर्ऋत्ये स्थंडिलेऽग्निंप्रतिष्ठाप्य । तदीशान्यांनवग्रहमंडले ग्रहस्थापनंकृत्वा
संपूज्य तत्संबंधिकलशंस्थापयेत् । ततः कुशकण्डिकांकृत्वा क्रमेणपायसकृसरचरूञ्छ्रपयित्वा आज्य
भागांते यजमानोद्रव्यत्यागंकुर्यात् । ततः आदित्यादिग्रहेभ्यः क्रमेणार्कादिसमिच्चरुतिलाज्यद्रव्यैरष्टाष्ट
संख्ययाहुत्वा तैरेवद्रव्यैराधिदेवताप्रत्यधिदेवताभ्यश्चतुश्चतुःसंख्ययाहुत्वा विनायकादिदिक्पालांतेभ्यः
पलाशोदुंबरान्यतमसमिच्चरुतिलाज्यद्रव्येण द्विद्विसंख्ययाजुहुयात् । एवंग्रहहोमंकृत्वा प्रधानदेवसर्पेभ्यः
समिच्चर्वाज्याहुतिभिःप्रतिद्रव्यमष्टोत्तरशतसंख्ययाजुहुयात् । तत्रमंत्राः । ॐ नमोस्तुसर्पेभ्योयेकेचपृ
थिवीमनु । येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः स्वाहा । इदंसर्पेभ्योनमम १०८ इति हुत्वा बृहस्पतये
पितृभ्यश्चाष्टाविंशतिसंख्ययापायसाहुतिंदद्यात् । तत्रमंत्रः ॐ बृहस्पतेऽअतियदर्य्योअर्हाद्द्युमद्विभातिक्रतु
मज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणंधेहिचित्रंस्वाहा॥इदं बृहस्पतये०॥२८॥ॐ उदीरतामव
वरऽउत्परासऽउन्मध्यमाःपितरःसोम्यासः॥असुंयऽईयुरवृकाऋतज्ञास्तेनोवन्तुपितरोहवेषु स्वाहा॥इदं पितृ

भ्य २८तत अष्टाष्टपायसाहुतिभिर्भगादिचतुर्विंशतिदेवताभ्य लोकपालेभ्यश्चजुहुयात् । ॐ भगायस्वाहा
इदंभगाय८(ॐकार सर्वत्र) अर्यमणेस्वाहा इदं०८सवित्रे० इदं०८त्वष्ट्रे० इदं०८वायवे० इदं०८इंद्राग्नीभ्यां०
इदं० ८ मित्राय० इदं० ८ इंद्राय० इदं० ८ निर्ऋतये० इदं०८अद्भ्य स्वाहा इदं० ८ विश्वेभ्योदेवेभ्य ०इदं०८
विष्णवे० इदं० ८ वसुभ्य ० इदं० ८ वरुणाय० इदं० ८ अजैकपदे० इदं० ८ अहिर्बुध्न्याय० इदं० ८ पूष्णे०
इदं०८विष्णवे० इदं०८अश्विभ्यां० इदं० ८ यमाय० इदं०८अग्नये० इदं० ८ प्रजापतये० इदं० ८ सोमाय०
इदं० ८ रुद्राय० इदं० ८ ॐ अदितयेस्वाहा इदमदितये० ८ ॐ इंद्रायस्वाहा इदं० ८ अग्नये० इदं० ८
यमायस्वाहा इदं० ८ निर्ऋतये० इदं० ८ वरुणाय० इदं० ८ वायवे० इदं० ८ कुबेराय० इदं० ८ ईशानाय०
इदं० ८ इति पायसाहुतिभिर्होमंकृत्वा पूर्वोक्तमूलशांतिवत् । कृणुष्वेतिपंचदशर्ग्भि । गायत्र्या । जातवेदसे
इतिमंत्रेण । त्र्यंबकमितिमंत्रेण । सीरायुंजंतीत्यनेन । तामग्निवर्णामि ऋचा । वास्तोष्पतेइत्यनेन । अग्नेनयं
इत्यनेन । क्षेत्रस्यपतिना इतिमंत्रेण । गृणानाजमदग्निना इत्यनेन । अग्निर्दूतमित्यृचा । हिरण्यवर्णामित्या
दिपंचदशर्ग्भि ॥ १५ ॥ त्वंनसोमेतिद्वयेन ॥ २ ॥ यातेरुद्रइत्यनेन च कृसरपायसाज्यहोमंकुर्यात् मंत्राः

सर्वेमूलशांतौपूर्वंउक्ताएव । ततः स्रुवेण व्यस्तसमस्तव्याहृतिभिराज्यंहुत्वा स्विष्टकृदादिप्रायश्चित्तहोमांते दिक्पालेभ्योनवग्रहेभ्योविनायकादिभ्यःसर्पेभ्यो बृहस्पतये पितृभ्यो रुद्रायक्षेत्रपालायचसदीपमाषभक्त बलीन्दद्यात् । ततः आचार्योयजमानेनसहितश्चतुर्गृहीतेनाज्येन समुद्रादूर्मिरितिपूर्वोक्तेनसूक्तेनपूर्णाहुतिं जुहुयात् । ततः प्रणीतानिनयनादिकर्मशेषंसमाप्य रुद्रंसर्पांश्चपुनःपंचोपचारैःसंपूज्य प्रणम्य सर्वकलशो दकंपात्रांतरेगृहीत्वासर्त्विगाचार्योयजमानं सर्वौषधीरनुलिप्तांगंधृतनववस्त्रंधृतनववस्त्रांसपुत्रांतत्पत्नींचाभि षिंचेत्।मंत्रास्तुमूलशांतौपूर्वोक्ताः। अक्षीभ्यांमितिषट्६त्रिभिष्ट्वंदेवेतिसप्तमंत्राः७आपोहिष्ठेतिनवर्चंसूक्तम् ९ आपइद्वाइतिद्वयम् २ सहस्राक्षेणेतिमंत्रत्रयम् ३ देवस्यत्वेतित्रयम् ३ यज्जाग्रतो इतिषट् ६ योसौवज्रधरोदे वोमहेंद्रोगजवाहनः ॥ सार्पजातशिशोर्दोषंमातापित्रोर्व्यपोहतु ॥१॥ योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः॥ सप्तजिह्वश्चदेवोग्निःसार्पदोषंव्यपोहतु ॥ २ ॥ योऽसौदंडधरोदेवोधर्मोमाहिषवाहनः ॥ सार्पजातशिशोर्दोषं व्यपोहतुयमोमम ॥ ३ ॥ योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः ॥ प्रशामयतुसार्पोत्थंदोषंगंडांतसंभवम् ॥ ४ ॥ योसौपाशधरोदेवोवरुणश्चजलेश्वरः ॥ नक्रवाहःप्रचेतानोसार्पोत्थाघंव्यपोहतु ॥ ५ ॥ योसौ

देवोजगत्प्राणोमारुतोमृगवाहन ॥ प्रशामयतुसार्पोत्थंदोषं बालस्यशांतये ॥ ६ ॥ योसौनिधिपतिर्देव
खड्गभृद्वाजिवाहन ॥ मातापित्रो शिशोश्चैवसार्पदोषंव्यपोहतु ॥ ७ ॥ योसोपशुपतिर्देव पिनाकीवृषवा
हन ॥ आश्लेषामूलगडांतदोषमाशुव्यपोहतु ॥ ८ ॥ विघ्नेश-क्षेत्रपोदुर्गालोकपालान्नवग्रहा ॥
सर्पदोषप्रशमनसर्वेकुर्वन्तुशांतिदा ॥ ९ ॥ आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच ॥ भ्रातृज्ञातिकु
लस्थानांदोषंसर्वंव्यपोहतु ॥ १० ॥ योसौवागीश्वरोनामग्रहाधिदेवोवृहस्पति ॥ मातापित्रो शिशोश्चैवगंडांतंस
व्यपोहतु ॥ ११ ॥ पितर सर्वभूतानांरक्षंतुपितर सदा ॥ सर्पनक्षत्रजातस्यवित्तचज्ञातिबांधवान् ॥ १२ ॥ तत
सुरास्त्वामभिषिंचंत्वित्यादिभि:पूर्वोक्तैश्चाभिषिच्य । सर्वकलशोदकेनान्येनचशतच्छिद्रमंतर्धायाभिषिक्तोय
जमान आचार्यायधेनुं ब्रह्मणेवृषभ रुद्रजापिनेकृष्णमनड्वाहं रुद्रप्रतिमां च दत्त्वा ऋत्विग्भ्यो यथाशक्तिद
क्षिणां दद्यात् तत सर्पाणामुत्तरपूजनविधाय ताम्रपात्रेफलपुष्पादियुक्तमर्घ्यंगृहीत्वा। ॐसर्पाधीशनमस्तुभ्यं
नागानांचगणाधिप॥गृहाणार्घ्यंमयादत्तसर्वारिष्टप्रशांतये॥१॥ इत्यर्घ्यंदत्त्वा।उत्तिष्ठेतिविसृज्य संकल्पपूर्वक
माचार्यहस्तेप्रतिपाद्याभिसंपूज्य गच्छगच्छेतिविसृज्य यथाशक्ति ब्राह्मणान्भोजयित्वा शांतिजपंकारयित्वा

सुहृद्युक्तोभुंजीत इत्याश्लेषाशांतिप्रयोगः ॥अथ ज्येष्ठाशांतिप्रयोगः॥गर्गः ज्येष्ठर्क्षेतुपुमाञ्जातोज्येष्ठभ्रातुर्विनाशकः॥ज्येष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधवाग्रजम्॥१॥पादत्रयेजातनरोज्येष्ठोप्यत्रप्रजायते॥ ज्येष्ठांत्यपादजातस्तुपितुःस्वस्यचनाशकः ॥२॥ तस्माच्छांतिंप्रवक्ष्यामिगंडदोषप्रशांतये॥तद्यथा । द्वादशाहेशांत्युक्तशुभदिने वा गोमुखप्रसवशांतिंकृत्वा देशकालौसंकीर्त्य । अस्यशिशोर्ज्येष्ठानक्षत्रजननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं ज्येष्ठाजननशांतिं करिष्ये इति संकल्प्य । गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यऋत्विग्वरणानिकुर्यात् । ततः आचार्यः सर्षपविकिरणादिभूमिप्रोक्षणांतं कृत्वा। महीद्यौरित्यादिपूर्वोक्तप्रयोगेण कलशंसंस्थाप्य तंडुलपूर्णपात्रंनिधाय तदुपरि सुवर्णनिर्मितामिंद्रप्रतिमामग्न्युत्तारणपूर्वकंसंस्थाप्य । ॐ इंद्रायेन्दोमरुत्वंत० ॥१॥ ॐ सऽइषुहस्तैःसनिषङ्गिभिर्वशीसꣳ स्रष्टासयुधऽइन्द्रोगणेन॥ सꣳ सृष्टजित्सोमपावाहुशर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता॥ ॐभूर्भुवःस्वः इन्द्र इहागच्छ इहतिष्ठ इत्यावाह्य ॐ इंद्रायनमः इतिनाममंत्रेणवाग्यतः षोडशोपचारैःपूजयेत् । पूजायांरक्तवस्त्रद्वयंचदद्यात् ॥ ततः तत्रैव आग्नेयादिषुक्रमेण ॐभूर्भुवःस्वः अग्नेइहागच्छ इहतिष्ठ ॥१॥ ॐभू०यम इहा०॥२॥ ॐभू० निर्ऋते इहा०॥३॥

ॐभु० व, इहा० ॥ ४ ॥, भू०वायो इहा० ॥ ५ ॥ ॐभू०कुवेर इहा० ॥६॥ ॐभू० ईशान इहा० ॥ ७ ॥ इतीन्द्रभिन्नान्लोकपालान्समंतादावाहनाममंत्रेणपोडशोपचारे पूजयेत। तत पूर्वादिदिक्षुचतुर कुंभान्मध्ये शताच्छिद्रं च सस्थाप्य दिक्कुभेषु पंचगव्य पंचामृतं पंचरत्नं पंचमृत्तिका पचपल्लवपंचवृक्षकपायसुवर्णकुशदूर्वा शतच्छिद्रे शतोपधींश्चक्षिप्त्वा वस्त्रयुग्मेनवेष्टयित्वातत्र पूर्वकुभे ॐत्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्वाद्वेषा६ंसिप्रमुमुग्ध्यस्मत् ॥ ॐभूर्भुव स्व वरुण इहागच्छ इहतिष्ठ ॥१॥ दक्षिणकुंभे। ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउपसोव्युष्टौ ॥ अवयक्ष्वनोवरुण६ंरराणोवीहिमृडीकंसुहवोनऽएधि ॥ ॐभू०वरुणइहा० ॥ २ ॥ पश्चिमकुंभे। ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ॐभू०वरुण इहा० ॥ ३ ॥ उत्तरकुंभे ॐ तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहवोध्युरुश६ंसमानऽआयुःप्रमोषीः ॥ ॐ भू० वरुण इहा० ॥ ४ ॥ इतिसर्वत्र वरुणमावाह्य वस्त्रपुष्पाद्यै पोडशोपचारे पूजयेत्। ततश्चत्वार ऋत्विजः। आनोभद्रा०

इतित्रयोदशमंत्राः ॥ १३ ॥ भद्राअग्नेरितिद्वादशमंत्राः ॥ १२ ॥ सहस्रशीर्षा इत्यादिपुरुषसूक्तम् ॥ १६ ॥ कद्रुद्राय इति नवमंत्रांश्चचतुर्दशीशांतौ पूर्वोक्ताञ्जपेयुः । आचार्योमूलमंत्रं इंद्रसूक्तं रुद्रसूक्तं मृत्युंजयं च जपेत्। ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्य संपूज्य आज्यभागांते ग्रहहोमं कृत्वा प्रधानदेवमिंद्रं पलाशसमिदाज्यचरुद्रव्यैरष्टोत्तरशतसंख्यया । इंद्रायेंदोमरुत्वत इति मंत्रेण । अथवा । ॐ सऽइषुहस्तैः सनिषङ्गिभिर्वशीसंस्रष्टासयुधऽइन्द्रोगणेन । संसृष्टजित्सोमपावाबाहुशर्द्ध्युग्रधन्वाप्रतिहिताभिरस्ता स्वाहा ॥ इदमिंद्राय० १०८ इति मंत्रेण जुहुयात् ॥ ततः ॐ अग्नये० इदं० ॥ १ ॥ यमाय० इदं० ॥ २ ॥ निर्ऋतये० इदं० ॥ ३ ॥ वरुणाय० इदं० ॥ ४ ॥ वायवे० इदं० ॥ ५ ॥ कुबेराय० इदं० ॥ ६ ॥ ईशानाय० इदं० ॥ ७ ॥ इतींद्रभिन्नलोकपालेभ्योहुत्वा प्रजापतिं ॐ भूर्भुवःस्वःस्वाहा इदंप्रजापतये नममइत्यष्टोत्तरशततिलाहुतिभिर्हुत्वा शेषेणस्विष्टकृदादिहोमंकृत्वा बलिदानांतेपूर्णाहुतिंप्रणीताविमोकंचकुर्यात् ततःसभार्यंसशिशुंयजमानंपूर्वोक्तैर्वारुणैर्मंत्रैरभिषिञ्चेत्। ॐसमुद्रज्येष्ठाःसलिलस्यमध्यात्पुनानायन्त्यनिविशमानाः।

इन्द्रोयावज्रीवृषभोरुरादता ऽआपोदेवीरिहमामवन्तु॥१॥या ऽआपोदिव्या ऽउतवास्रवन्तिखनित्रिमा ऽउतवाया
स्वयंजा ॥ समुद्रार्थायाशुचंयपावकास्ता ऽआपोदेवीरिहमामवन्तु ॥ २ ॥ यासांराजावरुणोयातिमध्येस
त्यानृते ऽअवपश्यञ्जनानाम् ॥ मधुश्चुतःशुचयोया पावकास्ता ऽआपोदेवीरिहमामवन्तु ॥ ३ ॥ यासुराजावरु
णोयासुसोमोविश्वेदेवायासूर्यमदन्ति ॥ वैश्वानरोयास्वग्नि प्रविष्टस्ता ऽआपोदेवीरिहमामवन्तु ॥ ४ ॥ इमम्
म्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ ५ ॥ द्यौःशान्तिरन्तरिक्षꣳ शांतिः पृथिवीशान्तिरापः
शान्तिरोषधयःशांतिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वꣳशान्तिः शान्तिरेवशांतिःसामा
शान्तिरेधि ॥ ६ ॥ सुरास्त्वामभिषिंचन्त्विति पूर्वोक्तैरभिषिंचेत् । ततो रूपंरूपमितिमंत्रेणाज्यमवलोक्य
तत्पात्रंसदक्षिणंब्राह्मणायदत्त्वा इन्द्रंसंपूज्य नमस्तेसुरनाथायनमस्तुभ्यंशचीपते ॥ गृहाणार्घ्यंमयादत्तं
गडदोपप्रशांतये ॥१॥ इत्यर्घ्यंदत्त्वा आचार्यर्त्विगादिभ्य श्रेयोगृहीत्वा इंद्रायसमर्प्याचार्यायपयस्विनींगां
रक्तवस्त्रद्वयं च दत्त्वोत्तरपूजान्ते इंद्रंविसृज्यप्रतिमाम् । यक्षगंधर्वसिद्धैश्चपूजितोसिशचीपते ॥ दानेनानेनवै

वेशगंडदोषंविनाशय ॥१॥ अज्ञानाद्वाऽथवाज्ञानाद्वैकल्याद्वाधनस्यच ॥ यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुमर्हसि॥इतिमंत्रेणाचार्यायचदत्त्वा ऋत्विग्भ्योपियथाशक्तिदक्षिणांदत्त्वाग्निंविसृज्याष्टशतंपंचाशतंपंचविंशतिंवा ब्राह्मणान्भोजयेत् । इति ज्येष्ठाशांतिप्रयोगः॥अथ गर्गोक्तमघारेवत्यादिनक्षत्रगंडांतशांतिप्रयोगः ॥ रेवत्याश्लेषाज्येष्ठानक्षत्राणामंत्यघटिद्वयमश्विनीमघामूलानामाद्यघटिद्वयमितिघटिकाचतुष्टयमितंत्रिविधंनक्षत्रगंडांतम् । तत्र जननेनक्षत्रगंडांतशांतिः । मघाप्रथमपादजननेमूलवत्फलंतत्रगोप्रसवनक्षत्रेशपूजनग्रहमखाः कार्याः । रेवत्यश्विन्योरितरभागेषुमघांतिमपादत्रयेचजननेदोषविशेषानुक्तेर्नशांत्यादिकम् ॥ अथ गंडांतशांतिप्रयोगः ॥ गोमुखप्रसवंकृत्वा देशकालौसंकीर्त्य अस्यशिशोरेवत्याश्विन्याश्लेषामघासन्ध्यात्मकनक्षत्रगंडांतजननसूचितारिष्टनिरासार्थं नक्षत्रगंडांतशांतिं करिष्ये । इतिसंकल्प्य । तदंगतयागणपतिपूजनपुण्याहवाचननांदीश्राद्धानिकृत्वा आचार्यंवृत्वातंशुक्लैःक्षौमवस्त्रमाल्यैरर्चयेत् । ततः आचार्यःसर्षपविकिरणभूमिप्रोक्षणे कृत्वा । षोडशभिरष्टाभिश्चतुर्भिर्वापलैःकांस्यपात्रंकृत्वा तत्पायसेन दुग्धेनवापूरयित्वा तत्र नवनीतपूरितशंखपूर्वाग्रंनिधाय तन्मुखेराजतींचंद्रप्रतिमांसंस्थाप्य । ॐ आप्यायस्वसमेतुतेविश्वतः

मोमुधृष्ण्यम् । भवाघाजस्यसङ्गथे । ॐ भूर्भुव स्व सोम इहागच्छइहतिष्ठ इत्यावाह्य ॐ सोमायनम इतिनाममंत्रेणषोडशोपचारे संपूज्य सितपुष्पसहस्रेणपुष्पांजलिंदद्यात् । पूजांते ॐ आप्यायस्वेतिमंत्रस्य सहस्रजप कार्य । ततस्तदुत्तरतस्ताम्रपात्रे स्वर्णमयीं वृहस्पतिप्रतिमां च संस्थाप्य ॐ वृहस्पतेऽअतियद र्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणधेहिचित्रम् ॥ ॐ भूर्भुव स्व वृहस्पते इहा० । ॐ वृहस्पतयेनम इतिषोडशोपचारे पूजयेत् । ( अत्रकेषुचिद्ग्रंथेपुनवग्रहहोमोपि लिखित नात्रप्रधानदेवताहोम ) ततोयजमान आचार्यायसशस्त्रसमौक्तिकचंद्रप्रतिमांदत्त्वा यथाशक्ति दक्षिणांदद्यात् । दशावरब्राह्मणांश्चभोजयेत् । इति नक्षत्रगंडांतशांतिप्रयोग ॥ ॥ अथैकनक्षत्रजनन शांतिप्रयोग ॥ गर्ग –एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयो ॥ प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्यनिश्चय ॥ १ ॥ तत्रशांतिंप्रवक्ष्यामिसर्वाचार्यमतेनतु ॥ शुभर्क्षेशुभवारेचचंद्रताराबलान्विते ॥ २ ॥ तस्यप्रयोग । माता पितृनक्षत्रोत्पत्तौ गोमुखप्रसवंकृत्वा भ्रातृनक्षत्रोत्पत्तौतमकृत्वा देशकालौसंकीर्त्य । अस्यशिशो पित्राद्य नेकनक्षत्रोत्पत्तिसूचितारिष्टशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पित्रादिनक्षत्रजननशांतिंकरिष्ये । इति

संकल्प्य । गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात् । ततः आचार्योऽग्न्यायतनादीशान्यांकुंभसंस्थाप्य रक्तवस्त्रयुग्मेनाच्छाद्य तत्र पूर्णपात्रोपरिजन्मर्क्षप्रतिमांसंस्थाप्य तन्नक्षत्रमंत्रेणावाह्य षोडशोपचारैः पूजयेत् ( नक्षत्रमंत्रास्तुसूक्तप्रकरणेद्रष्टव्याः ) ततोऽग्निंप्रतिष्ठाप्य कुशकण्डिकांकृत्वा आज्यभागांते तत्तन्नक्षत्रमंत्रेणसमिच्चर्वाज्यानिप्रत्येकमष्टोत्तरशतंहुत्वा होमशेषंसमाप्य शिशुंतत्पित्रादींश्चाभिषिंचेत् । अत्रग्रहमखोनावश्यकः। ततः उत्तरपूजां कृत्वा विसृज्यप्रतिमादिकंगवादिचाचार्यायदत्त्वा ऋत्विग्भ्यश्चप्रत्येकं सौवर्णमाषत्रयमितं दत्त्वा यथाविभवं यानशय्यासनादीनि च दत्त्वा ब्राह्मणान्भोजयित्वा स्वयंभुंजीत । इत्येकनक्षत्रजननशांतिप्रयोगः ॥ ७ ॥ ॥

अथ शौनकोक्तव्यतीपातवैधृतिसंक्रांतिजननशांतयः॥ कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः॥संक्रमश्चरवेस्तत्र जातोदारिद्र्यकारकः ॥ १ ॥ गोमुखप्रसवंकृत्वा । देशकालौसंकीर्त्य अस्यशिशोर्वैधृतौ व्यतीपाते संक्रांतौ वा जननसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थं वैधृतिजननशांतिं करिष्ये ( व्यतीपातादौतत्संकल्पः ) इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्यादिवरणानि कुर्यात् ।

तत आचार्यं सर्षपान् विकीर्य भूमिं प्रोक्ष्य । पूर्वस्यां गोमयेनोपलिप्य तत्र पंचद्रोणपरिमितव्रीहिराशिं
कृत्वा तदुपरि सार्द्धद्रोणद्वयमिततंडुलराशिं कृत्वा तदुपरि सपादद्रोणमिततिलराशिंचकृत्वा राशिमस्तकं
समंकृत्वा तत्र पंचरंगैरष्टदल विरच्य तत्कर्णिकायां कुंभं संस्थाप्य तीर्थोदकेनापूर्य तत्र सप्तमृत्पंचपल्लव
सर्वौषधिपंचगव्यपंचरत्नाष्टगंधानिप्रक्षिप्य वस्त्रयुग्मेनावेष्ट्य पूर्णपात्रंनिधाय तत्र स्वर्णप्रतिमासु वैधृति
शांतौ मध्ये त्र्यंबकमितिरुद्रम् । तद्दक्षिणत उत्सूर्य इति सूर्यम् । उत्तरत आप्यायस्वेति सोमं च स्थाप
येत् । तत्र मंत्राः ॐ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥
ॐ भूर्भुवः स्वः त्र्यंबकरुद्र इहागच्छ इहतिष्ठ ॥ १ ॥ ॐ उत्सूर्योबृहदर्चींष्यश्रेत्पुरुविश्वाजनिममानुषा
णाम् ॥ समोदिवादंदृशेरोचमानः क्रत्वाकृतः सुकृतः कर्तृभिर्भूत् ॥ ॐ भूर्भुवः स्वः सूर्य इहा० ॥ २ ॥
ॐआप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ॐ भू० सोम इहागच्छेहातिष्ठ ॥ ३ ॥
इत्यावाह्य नाममंत्रेण प्रत्येकं पूजयेत् । व्यतीपातसंक्रांत्योस्तु मध्ये सूर्यं तद्दक्षिणतोऽग्निमुत्तरतोरुद्रंचतत
त्प्रतिमास्वावाह्य पूजयेत् ॐ उत्सूर्य० ॐ भू० सूर्य इहा० ॥१॥ ॐ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥

देवांऽआसादयादिह ॥ ॐ भू॰ अग्नेइहा॰ ॥२॥ ॐ त्र्यंबकंयजामहे॰ ॐ भू॰ रुद्रइहा॰ ॥ ३ ॥ इत्यावाह्य षोडशोपचारैः संपूजयेत्। ततो रुद्रप्रतिमां स्पृशन् मृत्युंजयमंत्रमष्टशतमष्टाविंशतिसंख्यया वा यथाशक्ति जपेत्। ततः सूर्यप्रतिमांस्पृशन् ॐ विभ्राड्हत् इत्याद्यध्यायंजपेत्। ततः सोमप्रतिमांस्पृशन् ॐ आप्यायस्वेति मंत्रं जपेत्। व्यतीपातसंक्रमशांतौ तु पूर्वं विभ्राड्सूक्तजपस्ततोमृत्युंजयजपः अग्निजपोनास्ति। ततश्चतुर्दिक्षुऋत्विजः कुंभंस्पृष्ट्वा। ॐ आनोभद्रा॰१३। भद्राअग्ने॰१२। सहस्रशीर्षा॰१६। कद्रुद्रायेति॰९च पूर्वं चतुर्दशीशांत्युक्तान्। त्र्यंबकमंत्रांश्चजपेयुः॥ ततः आचार्यः कुंभात्पश्चिमेऽग्निंप्रतिष्ठाप्य ग्रहावाहनादिपूजांतं कृत्वा कुशकंडिकांविधाय आज्यभागान्ते ग्रहहोमं समाप्य रुद्रसूर्यसोमेभ्यः समिच्चर्वाज्यैस्तत्तत्पूर्वोक्तैर्मंत्रैर्मृत्युंजयमंत्रेण च तिलाहुतिभिरष्टशताष्टाविंशत्यन्यतरसंख्यया हुत्वा। शेषेणस्विष्टकृदादिहोमंसमापयेत्। व्यतीपातसंक्रांत्योस्तु सूर्याग्निरुद्रेभ्य इति विशेषः। ततोबलिदानांते कलशोदकैः समुद्रज्येष्ठा इति ज्येष्ठाशांतौ पूर्वोक्तेन सूक्तेन आपोहिष्ठेतित्र्यृचेन। अक्षिभ्यामिति गोमुखप्रसवशांत्युक्तेन सूक्तेन पावमानीभिः प्रधानदेवतामंत्रैः सुरास्त्वेत्यादिपौराणैश्चाभिषिंचेयुः ॥ ततो यजमानोऽभिषेकवस्त्रमाचार्याय दत्त्वा

स्त्रीबालयुक्त ॐ रूपंरूपमितिमन्त्रेणाज्यमवेक्ष्य तत्पात्रंसदक्षिणं ब्राह्मणायदत्त्वा आचार्याय वस्त्रद्वयं गां हे
मांगुलीयक यथाशक्ति सुवर्णं प्रच्छादनपटं च दत्त्वा ऋत्विग्भ्यश्च यथाशक्ति पारितोपिकीमन्येभ्यश्च भूय
सींदक्षिणां दत्त्वोत्तरपूजांकृत्वा विसृज्याचार्यहस्तेप्रतिपाद्याग्निंविसृज्य शतब्राह्मणानृत्विजश्चभोजयेत् ।
इति वैधृतिव्यतीपातसंक्रांतिशांतिप्रयोग ॥ अथ ग्रहणजननशांतिप्रयोग । ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदि
जायते ॥ इत्यसजायतेयस्तुतस्यमृत्युर्नसंशय ॥ १ ॥ व्याधिपीडाचदारिद्र्यंशोकश्चकलहोभवेत् ॥ शांतिं
तेपांप्रवक्ष्यामिनराणांहितकाम्यया ॥ २ ॥ गोमुखप्रसवंकृत्वा देशकालौसंकीर्त्य अस्य शिशोः सूर्यस्य
चंद्रस्य वा ग्रहणकालिकप्रसूतिसूचितसर्वारिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थंग्रहणजननशांतिं करिष्ये ।
इति संकल्प्य । गणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यादिवरणानि कुर्यात् । तत
आचार्यं सर्पपविकिरणभूमिप्रोक्षणे कृत्वा गोमयोपलिप्ते शुचिदेशे श्वेतवस्त्रोपरि सूर्यग्रहे तत्र मध्ये
आकृष्णेनेति सूर्यस्य हेमप्रतिमाम् । तद्दक्षिणत सीसकेन कयानश्चित्रेति राहोर्नागाकृतिम् । उत्तरत
स्वर्णमयींनक्षत्रदेवताप्रतिमां च सस्थापयेत्। चंद्रग्रहे तु मध्येरजतमयींआप्यायस्वेति चंद्रस्यपार्श्वयोराहु

नक्षत्रदेवतेपूर्ववत् । अथावाहनम् । ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यंञ्च ॥ हिरण्ययेनस
वितारथेनादेवोयातिभुवनानिपश्यन् ॥ ॐ भू० सूर्य इहागच्छ इहतिष्ठ ॥ १ ॥ ॐ कयानश्चित्रऽआभुवदू
तीसद वृधस्सखा ॥ कयाशचिष्ठयावृता ॥ ॐ भ० राहो इहा० ॥ २ ॥ ॐ आप्यायस्वसमेतुतेविश्वतं꞉
सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ॐ भू० सोम इहा० ॥ ३ ॥ (नक्षत्रमंत्रास्तु सूक्तप्रकरणेद्रष्टव्याः)
इत्यावाह्य रक्ताक्षतरक्तगंधरक्तपुष्पांबरादिभिःसूर्यंपूजयेत् । चंद्रग्रहे तु श्वेतवस्त्रश्वेतगंधाक्षतमाल्यादिभिः
सोमम्, कृष्णपुष्पांबरगंधादिभिश्चराहुंसंपूजयेत् । ततोऽग्निंप्रतिष्ठाप्य कुशकण्डिकांकृत्वा आज्य
भागांते सूर्यग्रहे सूर्याय अर्कसमिदाज्यचरुतिलैः प्रतिद्रव्यम् ॐआकृष्णेनेति मंत्रेणाष्टोत्तरशतसंख्यया ।
राहवे कयानश्चित्रेतिमंत्रेण दूर्वाज्यचरुतिलैस्तावत्संख्यैश्चहुत्वा नक्षत्रदेवतां नक्षत्रमंत्रेणपलाशसमिदाज्य
चरुतिलैरष्टोत्तरशतसंख्ययाजुहुयात् । चंद्रग्रहे तु । आप्यायस्वेतिमंत्रेणचंद्राय पलाशसमिदाज्यचरुतिलैः ।
शेषंपूर्ववत् । अत्र ग्रहमखः कृताकृतः । ततो होमंसमाप्य बलिदानांतेएकस्मिन्कलशेपंचगव्यपंचत्वक

पंचपल्लवरत्नसर्वौषधीः प्रक्षिप्य तदुदकेन वारुणैर्मंत्रैरापोहिष्ठादिभिस्त्रिभिः इमंमेगंगेइत्यनेन तत्वायामीतिमंत्रेण च यजमानमभिषेचयेत् । ततः आचार्यंसंपूज्य तस्मैप्रतिमात्रयंगांचदक्षिणात्वेनदत्वा ब्राह्मणान्भोजयेत् । इत्यग्रहणजातानांसर्वारिष्टविनाशनम् ॥ कथितंभार्गवेणेदंशौनकायमहात्मने ॥ इति ग्रहणजननशांतिप्रयोगः ॥ ॥ अथ कात्यायनोक्तयमलजननशांतिप्रयोगः ॥अद्येत्यादिदेशकालौ संकीर्त्य । ममभार्यायमलजननसूचितसर्वारिष्टपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखां कात्यायनोक्तांयमलजननशांतिंकरिष्ये । इतिसंकल्प्य गणपतिपूजनादिआचार्यवरणांतंकुर्यात् । ततः अष्टसुदिक्षु अष्टकलशान् विधिनासंस्थाप्य उदकपूरणादिसर्वौषधीप्रक्षेपणांतंवरुणमावाह्यसंपूजयेत् । ततः अष्टकलशोदकैर्दंपत्योरभिषेकः । आपोहिष्ठेतितिसृभिः । कयानश्चित्रऽआभुवदूतीसदावृधः सखा॥ कयाशचिष्ठयावृता ॥ १ ॥ कस्त्वासत्योमदानांमंहिष्ठोमत्सदन्धसः ।दृढाचिदारुजेवसु ॥ २ ॥ इतिद्वाभ्याम् । स्तोकानामिन्दुम्प्रतिशूरऽइंद्रोवृषायमाणोवृषभस्तुराषाट्॥घृतप्रुषामनसामोदमानाःस्वाहादेवाऽअमृतामादयन्ताम् ॥१॥

आयात्विन्द्रोवसउपनऽइहस्तुतःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्यस्यपूर्वीर्द्यौर्नक्षत्रमभिभूतिपुष्यात् ॥ ॥ आनऽइन्द्रोदूरादानऽआसादभिष्टिकृदवसेयासदुग्रः ॥ ओजिष्ठेभिर्नृपतिर्वज्रबाहुःसङ्गेसमत्सुतुर्वणिःपृतन्यून् ॥ ३ ॥ आनऽइन्द्रोहरिभिर्यात्वच्छार्वाचीनोवसेराधसेच ॥ तिष्ठातिवज्रीमघवाविरप्शीमंयज्ञमनुनोवाजसातौ ॥ ४ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥५ ॥ इतिपंचैंद्रेण॥इमम्मेवरुणश्रुधीहवमद्याचमृडय॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वायामि० ॥ २ ॥ त्वन्नोऽअग्ने०॥३॥सत्वन्नोऽअग्ने०॥४॥ उदुत्तमं०॥५॥इति पूर्वोक्तेन पंच वारुणेन । ॐ इदमापःप्रवहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुंचतु ॥ १ ॥अपाघमपकिल्बिषमपकृत्यामपोरपः ॥अपामार्गत्वमस्मदपदुःष्वप्न्यꣳ०सुव ॥२ ॥ इत्यनेनचाभिषेकःकार्यः ॥ एवमभिषिक्तौदंपती धृतश्वेतवस्त्रचंदनौ उदङ्मुखौदर्भेषूपतिष्ठेताम् । ततःप्राङ्मुखआचार्योऽग्निग्रहस्थापनांतेकुशकण्डिकांकृत्वा तत्रमारुतंस्थालीपाकं श्रपयित्वाऽऽज्यभागाविष्ट्वा पूर्वो

तैः स्नपनमंत्रैराज्याहुतीर्हुत्वा स्थालीपाकस्यजुहोति । ॐ अग्नयेस्वाहा इदं० ॥ १ ॥ सोमाय० इदं ॥ २ ॥ पवमानाय० इदं ॥ ३ ॥ पावकाय० ॥ ४ ॥ मारुताय० ॥ ५ ॥ मरुद्भ्यः स्वाहा ॥ ६ ॥ यमाय० ॥ ७ ॥ अंतकाय० ॥ ८ ॥ मृत्यवे० ॥ ९ ॥ ब्रह्मणे० १० ॥ इत्येकैकयाचर्वाहुत्या अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते इति स्विष्टकृदादिहोम समाप्य आचार्यायवरंदत्त्वा ब्राह्मणान्भोजयित्वा स्वस्तिवाचयित्वाऽऽशी प्रतिगृह्यशांति र्भवतीति । एतदेवग्रहोत्पातेषूलूकगृध्रकपोता श्येनोवा गृहं प्रविशेत्स्तंभे वा प्ररोहेत् वल्मीक मधुजाल वा स्रवेदुदकुंभप्रज्वलने आसनशयनयानभंगेगृहकपोतिकाकृकलासशरीरसर्पणेछत्रध्वजविनाशेऽन्येषूत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेतदेवग्रहशान्तिंकुर्यात् । दासीमहिषीवडवागोहस्तिनीनांयमल जननेपीयंशान्ति कार्या।इतियमलजननशांतिप्रयोग ॥अथत्रिकप्रसवशान्तिप्रयोग ॥सुतत्रयेसुताचेत्स्यात्तत्रयेवासु तोयदि ॥ मातापित्रो कुलस्यापितदानिष्टंमहद्भवेत् ॥ १ ॥ ज्येष्ठनाशोवित्तहानिर्दुःखंवासुमहद्भवेत् । जातस्यै कादशाहेवाद्वादशाहेशुभेदिने गोप्रसवंकृत्वा देशकालौसंकीर्त्य । ममसुतत्रयजन्मानंतरं कन्याजननसूचि तसर्वारिष्टनिवृत्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं त्रिकप्रसवशांतिंकरिष्ये कन्यात्रयजन्मानंतरंपुत्रजन्मसूचिते

तिवानिमित्तानुसारेणसंकल्पःकार्यः । इति संकल्प्य गणेशपूजनादि आचार्यादिवरणांतंकर्मकृत्वा अग्निसं
स्थाप्य ग्रहस्थापनान्तेतदुत्तरतः कलशपंचके स्वर्णप्रतिमासु ब्रह्मविष्णुमहेशेंद्ररुद्रानावाह्यपूजयेत् । तत्र
मंत्राः । ॐ ब्रह्मयज्ञानं० ॐ भूर्भुवःस्वः ब्रह्मन्निहागच्छ इहतिष्ठ ॥ ॐ इदंविष्णु० भू० विष्णो इहा० ॥ २ ॥
त्र्यंबकंयजामहे० ॐ भू० त्र्यंबकइहा० ॥ ३ ॥ त्रातारमिंद्र०इंद्र इहा० ॥४॥ नमस्तेरुद्र० ॐ भू०रुद्रइहा०
॥ ५ ॥ इत्यावाह्य षोडशोपचारैःप्रत्येकंपूजयेत् । ततःकुशकंडिकांकृत्वा आज्यभागांते समिच्चरुतिलाज्यैर्ग्र
हहोमंसंपाद्य । ब्रह्माणंविष्णुंमहेशंइंद्रंरुद्रंच प्रत्येकं समिदाज्यचरुतिलैःपूर्वोक्तावाहनमंत्रैः प्रतिद्रव्यमष्टोत्त
रशतसंख्याहुतिभिर्हुत्वा स्विष्टकृदादिहोमशेषंसमाप्य सकुटुंबस्याभिषेकंकृत्वा आचार्यायहिरण्यंधेनु
मेकांच दत्त्वाऋत्विग्भ्योयथाशक्ति दक्षिणांदद्यात्।ततः आज्येमुखावलोकनं कृत्वा शांतिपाठं पठित्वा ब्राह्म
णान्भोजयेत्।इति त्रिकप्रसवशांतिप्रयोगः॥ अथ सदंतजननशांतिप्रयोगः ॥ उपरिप्रथमंयस्यजायंतेथशिशो
र्द्विजाः॥ दंतैर्वासहयस्यस्याज्जन्मभार्गवसत्तम॥१॥द्वितीयेचतृतीयेचचतुर्थेपंचमेतथा॥यदादंताश्चजायन्तेमा
सेचैवमहद्भयम् ॥ २ ॥ मातरंपितरंवाऽथखादेदात्मानमेवच ॥ बालानामष्टमेमासिषष्ठेमासिततःपुनः ॥ ३ ॥

दतायस्यचजायंतेमातावाम्रियतेपिता ॥ बालकः पीड्यतेवात्रस्वयमेवनसंशयः ॥ ४ ॥ केचित्तुअष्टमेमासिदं
तजन्मशुभमाहु । तत्र प्रयोग । शांत्युक्तेशुभदिने देशकालौसंकीर्त्य अस्यशिशो सदंतजननसूचितसर्वारिष्ट
निवृत्तिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसदंतजननशांतिंकरिष्ये । अथवा अस्यशिशो प्रथममूर्ध्वदंतजननसूचिता
रिष्टेत्यादि वा द्वितीयेमासेदंतजननसूचितेत्यादि वा संकल्प यथानिमित्तं योजयेत् । इतिसंकल्प्य गणेश
पूजादिआचार्यवरणांतंकृत्वास्थंडिलोत्तरभागेनौकायांस्वर्णपीठेवास्वस्तिकयुतेबालकमुपवेश्य। सर्वौषधिस
र्वगंधसर्वधान्यपंचरत्नपंचगव्यसप्तमृत्तिकापुष्पफलादियुक्तजले स्नापयेत् । तत स्थंडिलपूर्वंत यथाविधिना
कलशंसंस्थाप्य तत्र प्रतिमासु ॐ धात्रेनम धातारमावाहयामि स्थापयामि ॥ १ ॥ अग्नयेनम अग्निमावा०
॥ २ ॥ सोमाय० सोममावाह० ॥ ३ ॥ वायवे०वायुमावाह० ॥४॥ पर्वतेभ्योनम पर्वतानावाहयामि० ॥ ५ ॥के
शवायनम केशवमावाहयामि॥५॥ इत्यावाह्य षट् देवता नाममंत्रेण संपूज्य प्रणमेत्। तत स्थंडिलेऽग्निंप्र
तिष्ठाप्य आज्यभागांते धातारं नाममंत्रेण सकृच्चरुणा वह्न्यादिपंचदेवताएकैकयाज्याहुत्यानाग्नेवहुत्वा
शेषेणस्विष्टकृदादिहोमंसमाप्य होमांतेदक्षिणांदत्वा ससाहं यथाशक्ति ब्राह्मणान्भोजयेत् । अष्टमदिने कांच

नादि दानं दत्त्वा कर्मेश्वरार्पणंकुर्यात् । षष्ठाष्टममासयोर्दंतजनने तु एकस्याबृहस्पतिदेवतायाः पूजनं दधि मधुघृताक्तानामश्वत्थसमिधामष्टोत्तरशतंबृहस्पतिमंत्रेणजुहुयात् । शेषं पूर्ववत् । इति सद्दंतजननशांतिप्रयोगः ॥७॥ ॥ अथ दिनक्षयादिजननशांतिः॥ गर्गः—दिनक्षयेचभद्रायांप्रसूतिर्यदिजायते ॥ यमघंटेदग्धयोगे मृत्युयोगेचदारुणे ॥ १ ॥ दुष्टयोगतिथीनांचनिषिद्धांशेषुचेत्तदा ॥ अतिदोषकरीप्रोक्तातस्मिन्पापयुतेसति ॥ २ ॥ यजमानोदेवतानांग्रहाणांचैवपूजनम् ॥ दीपंशिवालयेभक्त्याघृतेनपरिदापयेत् ॥ ३ ॥ अभिषेकंशंकरस्य ह्यश्वत्थस्यप्रदक्षिणम् ॥ अभीष्टफलसिद्ध्यर्थंकुर्याद्ब्राह्मणभोजनम् ॥ ४ ॥ गाणपत्यंपुरुषसूक्तंसौरंमृत्युजयंशुभम् ॥ शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्युंजयीभवेत्॥५॥ इतिदिनक्षयादिशांतिः ॥ अथ सिंहादिप्रसूतगवादिशांतिः।अथर्ववेदपरिशिष्टे।माघेबुधेचमहिषीश्रावणेवडवादिवा।सिंहेगावःप्रसूयन्तेस्वामिनोमृत्युदायकाः विधानंतत्रकर्त्तव्यंनरेणहितमिच्छता । सौरैःसूक्तैःप्रकर्तव्योहोमःसूर्यस्यतुष्टये ॥ प्रधानंतिलसर्पिश्चपायसंशर्करायुतम् । सहस्रंहवनंप्रोक्तंदानान्यष्टौयथाविधि ॥ प्रत्यृचंपायसंहुत्वातांगांविप्रायदापयेत्॥ततोष्टौ दानानि।तिलालोहंहिरण्यंचकार्पासंलवणंतथा॥ सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतम् ॥ इतिसिंहादिप्रसू

गवादिजननशांति ॥ अथज्वरादिरोगोत्पत्तिशांतिप्रयोग ॥ तत्रतावन्नक्षत्रफलम् ॥ अश्विन्यांरोगोत्पत्तावे
काह नवदिनानि वा पचविंशतिदिनानि पीडा ॥ १ ॥ भरण्यामेकादशैकविंशतिर्वा मासंमृत्युर्वा ॥ २ ॥ कृत्ति
कायांदशनवैकविंशति र्वा ॥ ३ ॥ रोहिण्यां दश वा नव सप्त त्रीणि वाऽह्यानि ॥ ४ ॥ मृगे पंच नव वा त्रिंशद्वा
॥ ५ ॥ आर्द्रायां मृत्युर्वादशाहं मासं वा ॥ ६ ॥ पुनर्वसोसप्त नव वा मृत्युर्वा ॥ ७ ॥ पुष्ये सप्त वा मृत्यु ॥ ८ ॥
आश्लेषायां मृत्युर्वा विंशतिर्त्रिंशद्वा नव दिनानि वा पीडा ॥ ९ ॥ मघायां मृत्युर्वासार्द्धमासान्वामासं विंशति
दिनानि वा पीडा ॥ १० ॥ पूर्वाफाल्गुन्यां मृत्युर्वाऽर्द्धं मासं वा पंचदश वा षष्टिदिनानि पीडा ॥ ११ ॥ उत्तरा
फाल्गुन्यां सप्तविंशति पंचदश सप्त वा दिनानि ॥ १२ ॥ हस्ते मृत्युरष्ट वा सप्त पंचदश दिनानि वा ॥ १३ ॥
चित्रायां पक्षमष्ट वा दश वेकादशाहानि ॥ १४ ॥ स्वात्यां मृत्युर्वैकद्वित्रिचतु पचमासैर्वा दशदिने रोगना
श ॥ १५ ॥ विशाखायां मासं वा पक्षं वाऽष्टदिन विंशतिदिनानि वा पीडा ॥ १६ ॥ अनुराधायां दशरात्रमष्टा
विंशतिरात्रं वा ॥ १७ ॥ ज्येष्ठायां मृत्युर्वा पक्षं वा मासं वैकविंशतिरात्रं वा पीडा ॥ १८ ॥ मूले मृत्य पक्षं
नवरात्र विंशतिरात्रं वा पीडा ॥ १९ ॥ पूर्वाषाढायां मृत्युर्वा द्वित्रिषडादिमासैर्विंशतिदिने पक्षेण वा रोगना

शः ॥ २० ॥ उत्तराषाढायां सार्द्धमासं विंशतिरात्रं वा मासम् ॥ २१ ॥ श्रवणे पंचविंशतिर्दश वैकादश वा षष्टिर्वाहानि ॥ २२ ॥ धनिष्ठायां दशरात्रं पक्षं मासं वा त्रयोदशरात्रम् ॥२३॥ शततारकायां द्वादशाष्टैकादश वा ॥ २४ ॥ पूर्वाभाद्रपदायां मृत्युर्वा द्वित्र्यादिमासं वा दशरात्रम् ॥ २५ ॥ उत्तराभाद्रपदायां सार्द्धमासं पक्षं सप्ताहं दशाहं वा ॥ २६ ॥ रेवत्यां ज्वराद्युत्पत्तौ दशाहमष्टाविंशतिरात्रं वा पीडा ॥ २७ ॥ जन्मनक्षत्रे जन्मराशौ वाऽष्टमचंद्रे मृत्युयोगे च रोगोत्पत्तौ मृत्युः ॥ २८ ॥ येषुनक्षत्रेषुमरणमुक्तंतत्रशांतिरावश्यकी॥अन्यत्र कृताऽकृतावा॥अथ सर्वनक्षत्रसाधारणःशांतिप्रयोगः । मासपक्षाद्युच्चार्य्यममोत्पन्नस्यामुकव्याधेर्जीवच्छरीराविरोधेनसमूलनाशार्थममुकनक्षत्रदेवताख्यं जपं करिष्ये । इति संकल्प्य । अष्टशताष्टसहस्रायुतान्यतमसंख्यया तत्तद्देवतामंत्रजपं कृत्वा ब्राह्मणद्वारा वा कारयित्वा शांतिं कुर्यात् तद्यथा । देशकालौसंकीर्त्य ममोत्पन्नव्याधेर्जीवच्छरीराविरोधेन समूलनाशार्थममुकनक्षत्रशांतिंकरिष्ये । इति संकल्प्य गणेशपूजाद्याचार्यवरणांतं कृत्वा आचार्यं पूजयेत् । ततः आचार्योभूमौतंडुलैश्चतुरस्रंमंडलंकृत्वा तत्र यथाविधि कलशंसंस्थाप्य जलेनापूर्य्य गंधसर्वौषधिदूर्वापल्लवपंचत्वक्सप्तमृत्तिकापंचरत्नपंचगव्यहिरण्यानि तत्तन्मंत्रैः

क्षिप्त्वा वस्त्रद्वयेनावेष्ट्य सर्वेसमुद्रा इति तत्र तीर्थान्यावाह्य तत्त्वायामीति तत्र वरुणमावाह्य संपूजयेत्।तत
कुंभोपरि पूर्णपात्रे द्वादशदले सौवर्णीनक्षत्रदेवताप्रतिमां संस्थाप्य वस्त्रद्वयेनावेष्ट्य वक्ष्यमाणमंत्रेणावाह्य
तत्तद्गंधपुष्पधूपादिभि संपूजयेत्। तत स्थंडिलेपचभूसंस्कारान् कृत्वा तत्राग्निंप्रतिष्ठाप्य सूर्यादिग्रहां
श्चसंपूज्य कुशकण्डिकांकृत्वा आज्यभागंति दूर्वासमित्तिलक्षीराज्यै प्रतिद्रव्येणतत्तन्नक्षत्रदेवतामंत्रेणाष्टो
त्तरशतंहुत्वा मरणादिपीडाधिक्योक्तौ अष्टोत्तरसहस्रंहुत्वा गायत्रीमंत्रेणाष्टोत्तरशतसंख्यया होम कुर्यात्॥
ततो होमशेषंसमाप्य दध्योदनेनबलिदानंकृत्वा शांतिकलशोदकेन यजमानाभिषेकेविहिते आचार्यायगां
प्रतिमांचरोगीदद्यात्। ततोघृतेमुखमवलोक्यविप्रायदत्वा यथाशक्तिब्राह्मणान्भोजयेत्। ते च शांतिपाठं
पठित्वा आशिषोदद्यु। अत सर्वेशांतिर्भवति। इति सर्वरोगसाधारणशांतिप्रयोग। अथ सर्वरोगनाशकानि।
रोगानुसारेणलघुरुद्रमहारुद्रातिरुद्राणांजपोऽभिषेको वा विष्णुसहस्रनामस्तोत्रस्यशतंसहस्रमयुतं वा जप
सौरजप सूर्यनमस्कारार्घ्यदानानि पुरुषसूक्तजपोऽच्युतानंदगोविंदेतिनामत्रयजपो मृत्युंजयजप श्रीमंग
वतस्थज्वरस्तोत्रजपश्च रोगानुसारेणेतिसर्वरोगहराणि॥ अथ ग्रहणशांति। यस्यजन्मराशौ जन्मनक्षत्रे वा

ग्रहणं तस्यविशेषतोऽनिष्टप्रदस्तेनगर्गाद्युक्ताशांतिः कार्या । अथवाबिंबदानंकार्यम् । तद्यथा । चंद्रग्रहेरजतम
यंचंद्राबिंबं सूर्यग्रहेतुसौवर्णंसूर्यं द्वयोश्च सुवर्णमयंनागबिंबं च कृत्वा घृतपूर्णेताम्रपात्रेकांस्यपात्रे वा निधाय
तिलवस्त्रदक्षिणासाहित्यंसंपाद्य देशकालौसंकीर्त्य ममजन्मराशिजन्मनक्षत्रास्थितामुकग्रहणसूचितस
र्वानिष्टप्रशांतिपूर्वकं एकादशस्थानस्थितग्रहणसूचितवच्छुभफलावाप्तयेबिंबदानं करिष्ये । इति संकल्प्य
सूर्यचंद्रराहुं च ध्यात्वा नमस्कृत्य । ॐतमोमयमहाभीमसोमसूर्यविमर्दन ॥ हेमतारप्रदानेनममशांतिप्रदो
भव ॥ १ ॥ विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत ॥ दानेनानेननागस्यरक्षमांवेधजाद्भयात् ॥ २ ॥ इति मंत्र
मुच्चार्य । देशकालौसंकीर्त्य ममजन्मनक्षत्रचतुर्थाद्यनिष्टस्थानस्थितामुकग्रहणसूचितसर्वानिष्टप्रशांतिपू
र्वकं एकादशस्थानस्थितवच्छुभफलावाप्तये इदं सौवर्णराहुबिंबंनागं सौवर्णसूर्यबिंबं वा राजतंचंद्रबिंबं घृत
पूर्णकांस्यपात्रनिहितं यथाशक्तितिलवस्त्रदक्षिणासहितममुकगोत्रायामुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे ।
इति दानवाक्येनपूजितब्राह्मणायदद्यात् । ततः शांतिपाठंपठित्वा राहुग्रस्तरवींदुबिंबंनावलोकयेत् । इति
ग्रहणशांतिः॥अथ काकमैथुनदर्शनादिशांतिप्रयोगः॥काकोमैथुनयुक्तश्चेच्छ्वेतःसयदिदृश्यते॥ सनरोमृत्युमा

मौतिर्ह्यथवास्थाननाशनम् ॥ १ ॥काकस्यमैथुनंपश्येत्काक शिरसिचेद्विशेत् ॥ शिरस्युरसिवाकुर्यात्पक्षाघा
तेनखैस्तथा ॥ २ ॥ विदारणंचकुरुतेशयानंचस्पृशेद्यदि ॥ तदावदेत्तुमरणंमहारिष्टमथापिवा ॥ ३ ॥ तद्दोपश
मनायेत्थंशांतिकर्मसमाचरेत् ॥ तत्रप्रयोग । देशकालौ संकीर्त्य मम काकमैथुनदर्शनादिसूचितसर्वानिष्टप्र
शांतिपूर्वकमायुरारोग्यसुखश्रीप्राप्त्यर्थं काकमैथुनदर्शनशांतिं करिष्ये । इति संकल्प्य गणपतिपूजापुण्या
हवाचनाचार्यादिवरणानिकुर्यात्। ततोगृहस्येशानभागे स्थंडिलं कृत्वा तत्र पंचभूसंस्कारपूर्वकं वरदनामान
मग्निंप्रतिष्ठाप्यतदीशान्यांयथाविधिकलशंस्थापयेत्।ततः कलशोपरिपूर्णपात्रेसौवर्णीमिन्द्रप्रतिमांरुद्रप्रतिमां
चअग्न्युत्तारणपूर्वकं सन्निधाय।ॐ त्रातारमिंद्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरु
हूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ ॐभू०ईंद्र इहागच्छ इहतिष्ठ इतींद्रम् । ॐ त्र्यंबकंयजामहेसुगंधिं
पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ ॐ भूर्भुवःस्वः त्र्यंबक इहा० । इति त्र्यंबकं
तत्रैवलोकपालांश्चावाह्य । ॐ इंद्रायनमः । ॐ त्र्यंबकायनमः । लोकपालेभ्योनमः । इति प्रत्येकंषोडशोप
चारैः संपूजयेत् । ततः कुशकंडिकांकृत्वा आज्यभागांतेपलाशसमिच्चर्वाज्यव्रीहिभिः प्रत्येकमष्टोत्तरशतम् ।

ॐ त्रातारमिंद्रं० ॥ १ ॥ त्र्यंबकंयजामहे० ॥२॥ इति मंत्राभ्यांहुत्वा।लोकपालेभ्यस्तैरेवद्रव्यैर्दशकृत्वःसकृद्वा हुत्वा व्रीहितिलैर्व्याहृतिहोमंकृत्वा स्विष्टकृदाहोमशेषंसमापयेत् । ततश्चरुशेषतोलोकपालेभ्यः बलिदानं कृत्वा । ॐ ऐंद्रवारुणवायव्याः सौम्यावैनैरृतास्तथा ॥ वायसाःप्रतिगृह्णंतुभूमावन्नंमयार्पितमितिमंत्रेणवाय सेभ्योबलिंदद्यात् । ततः पूर्णाहुतिंदत्वा कुंभोदकेनवैदिकैर्मंत्रैर्यजमानमभिषिच्य आज्येमुखावलोकनंकृत्वा आचार्यायसोपस्करांपयस्विनींधेनुं प्रतिमाद्वयं च संकल्प्य दद्यात् । ततो विशिष्टेभ्यो ब्राह्मणेभ्यो यथा शक्ति दक्षिणांदत्वा शतं पंचाशतं वा पंचविंशतिं दश वा विप्रान्भोजयेत् । ततः स्वस्तिवा नपूर्वकं विप्राशी गृंहीत्वाशुद्धोभवेत् । एवंकृतेभवेच्छांतिः काकारिष्टविनाशिनी ॥ एवमेव नानाविधदिव्यभौमांतरिक्षोत्पाते षुशांतिः यद्वा चंडीसप्तशतिजपः अथवा सूर्यगणेशक्षेत्रपालदुर्गामंत्राणांजपः रुद्रैर्जपोऽभिषेको वा इति काक मैथुनदर्शनादिशांतिप्रयोगः ॥ अथ पल्लीसरठपतनशांतिः ॥ तयोः स्पर्शमात्रेस्नानंकृत्वा पंचगव्यंप्राश्य आ ज्यमवलोक्य देशकालौस्मृत्वा ममपल्लीपतनजनिताशुभफलनाशार्थंशुभफलप्राप्त्यर्थंपल्लीपतनवासरठारोह णशांतिं करिष्ये । इति संकल्प्य । गणेशपूजनपुण्याहवाचनाचार्यवरणानि कुर्यात् ततो यथाविधि कलशं

पस्थाप्य तदुपरि रुद्रमूर्ति पल्ल्या सरठस्य वा हेम्नाप्रतिमां च प्रतिष्ठाप्य रक्तवस्त्रेणावेष्ट्य षोडशोपचारैः संपूजयेत्। ततः आज्यभागांते ॐ त्र्यंबकंयजामहे० इति मृत्युंजयमंत्रेण खादिरसमिद्भिरष्टोत्तरशतं तैलान्वाहुतिभिरष्टोत्तरशतं च हुत्वा स्विष्टकृदाद्यभिषेकांते स्वर्णवस्त्रतिलदानं च कृत्वा ब्राह्मणान्भोजयेत् इति पल्लीसरठपतनशांतिप्रयोगः ॥ श्रीरामकृष्णपौत्रेणकस्तूरीचंद्रसूनुना ॥ चतुर्थीलालविदुषाकृतोयशांतिसंग्रहः ॥१॥ इति श्रीबीकानेरविषयान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवेनश्रीरामकृष्णअमरचंद्रपौत्रेण श्रीकस्तूरीचंद्रचतुर्भुजसूनुना गौडपंडितश्रीचतुर्थीलाल ( चौथमल ) शर्मणा विरचिते शांतिप्रकाशे सर्वशांतिप्रकरणं द्वितीयं समाप्तम्॥ २ ॥ ॐ शांतिः शांतिः शांतिः ॥ ॥ ❀ ॥ ॥ ❀ ॥



श्रीगणेशायनमः ॥ अथ विश्वकर्मप्रकाशोक्तवास्तुशांतिः॥ तत्रतावद्गृहप्रवेशात्पूर्वेह्नि चंद्रसूर्यतारादिबलान्वि
तेज्योतिःशास्त्रोक्तसुमुहूर्त्ते प्रातःकृत्यंनिर्वर्त्य शुद्धोभूत्वा पंचगव्यादिनागृहशुद्धिंविधाय गृहमध्ये यथावकाशं
मंडपंकृत्वा तन्मध्ये हस्तमितंचतुरस्रंसयोनित्रिमेखलंकुंडं चतुरंगुलोच्छ्रितंस्थंडिलं वा कृत्वा तत्पूर्वे ऐशान्यं
चहस्तमितवेदिद्वयंकुर्यात्। सर्वतोभद्रकरणेतु मध्येसर्वतोभद्रं तस्यैशान्यांहस्तमात्रंनवग्रहपीठं आग्नेय्यांमा
तृकापीठंनैर्ऋत्यांवास्तुपीठंवायव्यांयोगिनीक्षेत्रपालपीठं च विधाय वास्तुशांतिंकुर्यात् एवंयथाविधिमंडपा
दिरचयित्वा सुमुहूर्त्तेपूर्वाह्णे यजमानोभार्यापुत्रादिभिःसह उष्णोदकेनमंगलस्नानंकृत्वा अहतशुक्लवासांस्यलं
कारांश्चपरिधाय नित्यावश्यकंसमाप्य धृतमंगलतिलकोगणपत्यादिदेवान्विप्रांश्चनमस्कृत्य शुभासनेप्रा
ङ्मुख उपविश्य स्ववामतः पत्नींपुत्रांश्चोपवेश्य सपवित्रपाणिराचम्य प्राणानायम्य शांतिपाठंपठित्वा ॥
ॐश्रीमन्महागणाधिपतयेनमः। श्रीलक्ष्मीनारायणाभ्यांनमः। उमामहेश्वराभ्यां०। ॐ सुमुखश्चैकदंतश्चेति
गणेशादिदेवान्संस्मरेत्। ततो देशकालौसंकीर्त्य अद्य पुण्यतिथावमुकगोत्रोऽमुकशर्मा ममगृहे सकुटुंबस्य
सपरिवारस्यसर्वारिष्टप्रशांत्यायुरारोग्यैश्वर्यसुखश्रीप्राप्त्यर्थं पुत्रपौत्रधनधान्यादिसंपत्प्रवृद्धये अभिलषितम

नोरथसिद्धचर्यं वास्तुकृतसर्वदोषोपशांतये शिख्यादिदेवताप्रीतये सनवग्रहमखांवास्तुशांतिकरिष्ये । तदग
त्वेनगणपतिपूजन पुण्याहवाचनं मातृकावसोर्धारापूजनं वृद्धिश्राद्धाचार्यर्त्विक्वरणादिकर्मकरिष्ये इति
संकल्प्य । गणपतिपूजन स्वस्तिपुण्याहवाचनं मातृकावसोर्धारापूजन आयुष्यमंत्रजपं नांदीश्राद्धंचपूर्वव
त्कृत्वा आचार्यमष्टौचतुरोवाऋत्विजश्चवृत्वावस्त्रालंकारादिभि संपूजयेत् । तत आचार्य । आचार्यक
र्मकरिष्ये इति संकल्प्य । लाजमिश्रितगौरसर्षपान्गृहीत्वा रक्षोघ्नमंत्रैर्दिग्रक्षणकृत्वा पंचगव्येनपावमान
सूक्तेनसर्वग्रहकर्मभूमिकुंडमंडपयज्ञसमाराश्चप्रोक्ष्य । भूमिपूजनंकुर्यात् । ततो वास्तुमंडलपश्चिमदिशिकुंडे
स्थंडिलेवापंचभूसंस्कारान्कृत्वा तत्र वरदनामानमग्निंप्रतिष्ठाप्य ईशाने ग्रहवेद्यां अधिदेवप्रत्यधिदेवसहि
तान्ग्रहान्संस्थाप्य तदैशान्यां रुद्रकलशंसंस्थाप्य दक्षिणवेद्यां एकाशीतिपदात्मकेमंडलेवास्तुदेवता स्थाप
येत् । तद्यथा । वेद्याः पश्चिमतउपविश्य आचम्य प्राणानायम्य । अद्येत्यादिदेशकालौसंकीर्त्य । अस्यवास्तोः
शुभतासिद्धये वास्तुदेवतास्थापनपूजनंचकरिष्ये । इतिसंकल्प्य । मंडलचतुष्कोणेषु लोहशंकुचतुष्टयं ईशाना
दिप्रदक्षिणक्रमेणरोपयेत् । तत्रमंत्र । विशंतुभूतलेनागालोकपालाश्चसर्वतः । अस्मिन्गृहेऽवतिष्ठंतुआयुर्बलक

रा:सदा १ इतिमंत्रेणप्रतिदिशंनिखनेत् ।प्रतिकीलमंत्रावृत्तिः । ततःशंकूनांपार्श्वे रोपणक्रमेणमाषभक्तदध्यो
दनेनबलिदानम् । तत्रमंत्राः । ईशान्याम् । रुद्रेभ्यश्चैवसर्पेभ्योयेचान्येतत्समाश्रिताः । बलिंतेभ्यःप्रयच्छामि
गृह्णंतुसततोत्सुकाः ॥१॥ आग्नेय्ये । अग्निभ्योऽप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः । तेभ्योबलिंप्रयच्छामिपु
ण्यमोदनमुत्तमम्॥२॥नैर्ऋत्यनैर्ऋत्याधिपतिश्चैव नैर्ऋत्यांयेचराक्षसाः । बलिंतेभ्यः प्रयच्छामिसर्वेगृह्णंतुमंत्रि
तम्॥३॥वायव्ये । वायव्याधिपतिश्चैव वायव्यांयेचराक्षसाः । बलिंतेभ्यः प्रयच्छामिपुण्यमोदनमुत्तमम्॥४॥
ततोवास्तुपीठोपरि कुंकुमादिना हेमरूपशलाकयावा पश्चादारंभाः प्रागताः उदक्संस्थाद्व्यंगुलांतराः समाः
प्रणवादिनमोंतैर्दशनामभिर्दशरेखाः कुर्यात् ॥ ॐ शांतायैनमः १ ॐयशोवत्यैनमः २ ॐ कांतायै० ३ ॐ
विशालायै० ४ ॐप्राणवाहिन्यै० ५ ॐसत्यै० ६ ॐसुमनायै० ७ ॐनंदायै० ८ ॐसुभद्रायै० ९ ॐसुरथा
यैनमः १० इतिदशरेखाः कृत्वा । पुनःदक्षिणारंभाउदगंताः प्राक्संस्था दशरेखाः कुर्यात् ॐ हिरण्यायैनमः
१ ॐसुव्रतायै०२ॐलक्ष्म्यै० ३ ॐविभूत्यै० ४ॐविमलायै०५ॐप्रियायै० ६ॐ जयायै०७ ॐज्वालायै०८
ॐ विशोकायै०९ॐविशदायैनमः१०एवं एकाशीतिपदंवास्तुमंडलंभवति।ततस्तारेखागंधादिभिः संपूज्यॐ

सर्वज्ञानक्रियाव्यक्तकमलासनाययोगपीठायनमः॥इतिपीठोपरिपुष्पाक्षतचंदनप्रक्षिपेत्॥तत ईशानकोणपदा
दारभ्यप्रदक्षिणक्रमेणतंडुलपुंजेषुशिख्यादिपंचचत्वारिंशद्देवता स्वस्वपदेषुप्रणवव्याहृतिभिस्तत्तन्नाम्नाआ
वाह्यस्थापयेत् तद्यथा तत्र ईशानकोणपदे वास्तो शिरस्थानेरक्तवर्णं शिखिनमेकपदं० ॐतमीशानजगतस्त
स्थुपस्पतिं धियञ्जिन्वमवशेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्ध स्वस्तये॥ ॐभूर्भुव
स्व भो शिखिनइहागच्छ इहतिष्ठ ॐशिखिनेनम शिखिनमावाहयामि इतिस्थापनम् ॥ १ ॥ तद्दक्षिणपदे
दक्षिणनेत्रेपर्जन्यंपीतवर्णं० ॥२॥ ॐमहाँइंद्रोवज्रहस्त षोडशीशर्म्मयच्छतु हन्तुपाप्मानंयोस्मान्द्वेष्टि।उ-
पयामगृहीतोसिमहेंद्रायत्वैपतेयोनिर्महेंद्रायत्वा। ॐभूर्भुव स्व भो पर्जन्यइहागच्छइहतिष्ठ ॐपर्जन्यायनम
॥२॥तद्दक्षिणपदेतदध पदेच दक्षिणश्रोत्रेद्विपदंपीतवर्णजयंतं० । ॐधन्वनागा धन्वनाजिंजयेमधन्वनातीव्रा
समदोजयेम ॥ धनु शत्रोरपकामं कृणोतिधन्वनासर्वाः प्रदिशोजयेम । ॐभूर्भुव स्व भोः जयन्तइहागच्छ
इह० ॥ ३ ॥ तद्दक्षिणपदद्वयेदक्षिणांसेपीतवर्णंकुलिशायुधं।ॐमहाँइन्द्रोवज्रहस्त०ॐभूर्भुव स्व भोः कुलि
शायुधइहागच्छ इहतिष्ठ ॥ ॐकुलिशायुधायनमः॥ ४ ॥ तद्दक्षिणपदद्वयेदक्षिणबाहो[illegible]

रश्मिर्हरिकेशःपुरस्तात् सविताज्योतिरुदयाँ२॥अजस्रम् । तस्यपूषाप्रसवेयातिविद्वान् सम्पश्यन् विश्वा
भुवनानिगोपाः ॐभूर्भुवः स्वः भोः सूर्य इहागच्छ० ॐसूर्यायनमः ॥ ५ ॥ तद्दक्षिण पदद्वये दक्षिणप्रवाहौ
शुक्लवर्णं सत्यं० । ॐव्रतेनदीक्षामाप्नोति दीक्षयाप्नोतिदक्षिणाम् । दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते ।
ॐभूर्भुवःस्वःभोसत्यइहा० ॐसत्यायनमः ॥ ६ ॥ तद्दक्षिण पदद्वये दक्षिणकूर्परे कृष्णवर्णंभृशम्० ॐभद्रं
कर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहिदेवहितंयदायुः ।
ॐभूर्भुवः स्वः भोःभृश इहागच्छ० ॐभृशायनमः ॥ ७ ॥ तद्दक्षिणोपरिस्थितैकपदे दक्षिणप्रवाहौ कृष्णवर्ण
माकाशं० ॐवयंसोमव्रतेतवमनुस्तनूषुबिभ्रतः प्रजावन्तःसचेमहि । ॐभूर्भुवःस्वः भोआकाशइहागच्छ०
ॐआकाशायनमः ॥ ८ ॥ दक्षिणाग्नेयकोणपदे दक्षिणप्रवाहौ धूम्रवर्णवायुं० । ॐआवायो भूषशुचिपाऽउपनः
सहस्रं ते नियुतोविश्ववार । उहोतेअन्धो मद्यमयामि यस्यदेवदधिषेपूर्वपेयम् वायवेत्वा । ॐ भूर्भुवःस्वःभो
वायो इहागच्छइहतिष्ठ । ॐ वायवेनमः ॥ ९ ॥ तत्पश्चिमैकपदेदक्षिणमणिबंधेरक्तवर्णंपूषाणं । ॐ पूषन्त
वव्रतेवयंनरिष्येमकदाचन स्तोतारस्तइहस्मासि । ॐ भूर्भुवः स्वः भोः पूषन्निहागच्छइहतिष्ठ । ॐ पूष्णे

नम ॥ १० ॥ तदध द्विपदेदक्षिणपार्श्वे शुक्लवर्णवितथम् । ॐ सविताप्रथमेऽहन्नग्निर्द्वितीयेवायुस्तृतीय
आदित्यश्चतुर्थे चन्द्रमा पञ्चमऋतु षष्ठेमरुत सप्तमेबृहस्पतिरष्टमे । मित्रोनवमेवरुणोदशम इन्द्रएकादशे
विश्वेदेवाद्वादशे ॐ भूर्भुव स्व भो वितथइहा० । ॐ वितथायनम ॥ ११ ॥ तत्पश्चिमपदद्वये दक्षिण
पार्श्वे पीतवर्णगृहक्षतं० । ॐ सवितात्वासवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमोवनस्पतीनाम् । बृहस्पति
र्वाचऽइन्द्रोज्यैष्ठ्यायरुद्र पशुभ्योमित्र सत्योवरुणोधर्मपतीनाम् । ॐ भूर्भुव स्व भोगृक्षतइहा० । ॐ गृह
क्षतायनम ॥ १२ ॥ तत्पश्चिमपदद्वयेदक्षिणोरौ कृष्णवर्णयम० । ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे
देवस्त्वासवितामध्वानक्तुपृथिव्या सꣳस्पृशस्पाहि । अर्चिरसिशोचिरसितपोसि । ॐ भूर्भुव स्व भोयम
इहा० । ॐ यमायनम ॥ १३ ॥ तत्पश्चिमपदद्वये दक्षिणजानुप्रदेशेरक्तवर्णगधर्वं० । ॐ प्रतद्वोचेदमृतंनुवि
द्वान् गन्धर्वो धामविभृतंगुहासव त्रीणिपदानिनिहितागुहास्ययस्तानि वेदसपितु पितासत् । ॐ भूर्भुवः स्व
भोगधर्वइहा० ॐ गधर्वायनम ॥ १४ ॥ तत्पश्चिमपदद्वयेदक्षिणजंघायां कृष्णवर्णभृंगराज० । ॐ सुपर्णः
पार्जन्य आर्तिर्वाहसोदर्विदाते वायवेबृहस्पतयेवाचस्पतये पैङ्गराजोऽलज आन्तरिक्षःप्लवोमद्गुर्मत्स्यस्ते नदीप

तयेद्यावापृथिवीयः कूर्मः।ॐ भुर्भूवः स्वः भोः भृंगराजइहा० ॐ भृंगराजायनमः ॥१५॥ तत्पश्चिमोपरिस्थैक
पदे दक्षिणस्फिचि पीतवर्णमृगं० । ॐ तद्विष्णोः परमंपदꣳ सदापश्यन्ति सूरयः ॥ दिवीवचक्षुराततम् । ॐ
भूर्भुवः स्वर्भोमृगइहा० ॐ मृगायनमः ॥ १६ ॥ तत्पश्चिमेनैर्ऋत्यकोणपदेपादयोः रक्तवर्णान्पितॄन् ॐ पितृ
भ्यः स्वधायिभ्यः स्वधानमः ॥ पितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ प्रपितामहेभ्यः स्वधायिभ्यः स्वधा
नमः ॥ अक्षन्पितरोऽमीमदन्तापितरो प्रतीतृपन्तापितरः पितरः शुन्धध्वम् । ॐ भूर्भुवः स्वर्भोः पितरइहाग
च्छतइहतिष्ठत ॐ पितृभ्योनमः ॥ १७ ॥ तदुत्तरैकपदेवामस्फिचिरक्तवर्णं दौवारिकं० ॐ द्रविणोदाः
पिपीषतिजुहोत प्रचतिष्ठत नेष्ट्रा दृतुभिरिष्यतः ॐ भू० दौवारिकइहा० ॐ दौवारिकायनमः ॥ १८ ॥
तदुत्तरपदेतत्प्राक्पदेचवामजंघायां शुक्लवर्णसुग्रीवम् । ॐसुषुम्णः सूर्य्यरश्मिश्चन्द्रमागंधर्वस्तस्यनक्षत्रा
ण्यप्सरसोभेकुरयो नाम । सनइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट्ताभ्यः स्वाहा । ॐभूर्भुवः स्वर्भो सुग्रीवइ०
ॐसुग्रीवायनमः ॥ १९ ॥ तदुत्तरपदद्वये वामजानौ रक्तवर्णपुष्पदंतं० । ॐनक्षत्रेभ्यः स्वाहा नक्षत्रिये
भ्यः स्वाहाहोरात्रेभ्य स्वाहार्धमासेभ्यः स्वाहा मासेभ्यः स्वाहा ऋतुभ्यः स्वाहार्तवेभ्यः स्वाहा संवत्सराय

स्वाहा द्यावापृथिवीभ्या ७ स्वाहा चंद्रायस्वाहा सूर्यायस्वाहारश्मिभ्य स्वाहा वसुभ्य स्वाहारुद्रेभ्य स्वा
हादित्येभ्य स्वाहा मरुद्भ्य स्वाहा विश्वेभ्योदेवेभ्य स्वाहा मूलेभ्य स्वाहा शाखाभ्य स्वाहा वनस्पतिभ्य
स्वाहा पुष्पेभ्य स्वाहा फलेभ्य स्वाहोषधीभ्य स्वाहा ॐभू० पुष्पदंतइहा० ॐपुष्पदंतायनम ॥ २० ॥
तदुत्तरपदद्वयेवामोरोशुक्लवर्णवरुणं० । ॐ इदम्मेवरुणश्रुधीहवमद्याचमृडय त्वामवस्युराचके ॐ भूर्भुव
स्वर्भोवरुणइहा० ॐ वरुणायनम ॥ २१ ॥ तदुत्तरपदद्वयेवामपार्श्वे पीतरक्तवर्णं असुरम् ॥ ॐ येरूपाणिप्र
तिमुञ्चमानाऽअसुरा सत स्वधयाचरति ॥ परापुरोनिपुरोयेभरन्त्यग्निष्टाँल्लोकान्प्रणुदात्यस्मात् ॐ भूर्भुव
स्वर्भो असुरइहा ० ॐअसुरायनम ॥ २२ ॥ तदुत्तरपदद्वयेवामपार्श्वे कृष्णवर्णं शोकं० । ॐ असवेस्वाहा
वसवेस्वाहा विभवेस्वाहा विवस्वते स्वाहा गणश्रियेस्वाहा गणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहा शू
पायस्वाहा सꣳसर्पायस्वाहा चंद्रायस्वाहा ज्योतिषेस्वाहा मलिम्लुचायस्वाहादिवापतयेतेस्वाहा ॐ भू०
भो शोकइहा० ओं शोकायनम ॥ २३ ॥ तदुत्तरोपरिस्थैकपदेवाममणिबंधे पीतवर्णं पापं० । ओं सूर्यर
श्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ २ ॥ अजस्रम् । तस्यपूषा प्रसवेयातिविद्वान् सम्पश्यन्विश्वा

भुवनानिगोपाः ॐभू० भोः पापइहा० ओंपापायनमः ॥ २४ ॥ तदुत्तरवायव्यकोणपदेवामप्रवाहौ रक्तवर्णं
रोगं० । ओंशिरोमेश्रीर्यशोमुखंत्विषिः केशाश्चश्मश्रूणि राजामेप्राणो अमृतᳫंसम्राट् चक्षुर्विराट्श्रोत्रम् ॥
ॐभू० भोरोगइहा० ओंरोगायनमः ॥ २५ ॥ तत्प्रागेकपदे वामप्रवाहौरक्तवर्णाअहिं० । ओंनमोस्तुसर्पेभ्यो
येके च पृथिवीमनु॥ये अन्तरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः॥ओंभूर्भुवः स्वर्भोअहेइहाअहयेनमः ॥२६॥तत्प्रा
कूपदेततोपिदक्षिणे। चेतिपदद्वये रक्तवर्णंमुख्यं० । ओं इषेत्वोर्जेत्वावायवस्थ देवोवः सविता प्रार्थयतुश्रेष्ठ
तमायकर्मणः आप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाअयक्ष्यामावस्तेनईशतमाघ शᳫंसोध्रुवा
अस्मिन् गोपतौस्याद्बह्वीर्यजमानस्यपशून्पाहि । ओंभूर्भुवः स्वर्भोमुख्यइहा० ओंमुख्यायनमः॥२७॥तत्प्रा
कपदद्वये वामबाहौ कृष्णवर्णंभल्लाटं । ओंबण्महाँ २॥ असि सूर्य वडादित्यमहाँ ॥ २ असि ॥ महते सतो
महिमापनस्यतेद्धादेव महाँ २॥ असि ॥ ॐभूर्भुवः स्वर्भोभल्लाटइहा०भल्लाटायनमः॥२८॥तत्प्राकूपदद्वयेश्वेत
वर्णसोमं० । ओंवयᳫंसोमव्रतेतवमनस्तनूषुबिभ्रतः। प्रजावन्तः सचेमहि ॐ भू० भोः सोमइहा० ॐ सोमा
यनमः॥ २९ ॥ तत्प्राकूपदद्वयेवामांसे कृष्णवर्णं सर्पं० ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः॥ दृशेविश्वायसू

र्य ७ स्वाहा ॐ भू० भो सर्पइहा० ओंसर्पायनम ॥ ३० ॥ तत्प्राक् पदद्वये वामश्रोत्रेपीतवर्णामदिर्ति० ॥ ॐ उतनोहिर्बुध्न्य शृणोत्वज एकपात्पृथिवीसमुद्र विश्वेदेवा ऋतावृधोहुवानास्तुता मत्रा कविशस्ता श्रवन्तु ॐ भू० अदितेइहा० ॐ अदितयेनम ॥ ३१ ॥ तत्प्रागुपरिस्थेपदे वामनेत्रे पीतवर्णां दिर्ति० । ओं अदिति द्यौरादितिरन्तरिक्षमदितिर्मातासापितासपुत्र विश्वेदेवा अदिति पंचजनाऽअदितिर्जातमदितिर्जनित्वम् । ॐभू० भोदिते इहा० अदितयेनम ॥ ३२ ॥ तत शिखिपदाध स्थितकोणपदेमुखेशुक्लवर्ण आप० । ॐ आपोअस्मान्मातर शुन्धयन्तु घृतेननो घृतव पुनतु । विश्वꣳहिरिप्रंप्रवहतिदेवीरुदिदाभ्य शुचिरापूतऽएमि ॐभू० भुव स्वर्भो आप इहागच्छत० । ॐ अद्भ्योनम ॥ ३३ ॥ आग्नेयवायुकोणापदाध कोणपदे दक्षिणहस्ते शुक्लवर्णं सावित्रं० । ओंउपयामगृहीतोसिसावित्रोसि चनोधाश्चनोधाऽअसिचनोमयिधेहि । जिन्वयज्ञं जिन्वयज्ञपतिंभगायदेवायत्वासवित्रे ओंभू० भो सावित्र इहा० ओंसावित्रायनम ॥ ३४ ॥ नैर्ऋत्ये पितृपदाध कोणपदेमेद्रे श्वेतवर्णंजय० । ओंमर्म्माणिते वर्मणाच्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदंतु । ॐभूर्भोजयइहा० ॐजयायनमः ॥ ३५ ॥

वायव्ये रोगपदाधःकोणपदेवामहस्तेरक्तवर्णरुद्रं० । ॐ सुत्रामाणंपृथिवींद्यामनेहसꣳ सुशर्माणमदितिꣳ
सुप्रणीतिम् ॥ दैवींनावꣳ स्वरित्रामनागसमस्रवन्तीमारुहेमास्वस्तये ॐ भू० भोरुद्रइहा० ॐ रुद्रायनमः
॥ ३६ ॥ ततोमध्यगतनवकोष्ठकसंलग्नपूर्वपदत्रयेदक्षिणहस्तेनकृष्णवर्णं अर्यमणं० । ॐ अर्यमणंबृहस्पति
मिंद्रं दानाय चोदय वाचंविष्णु ꣳ सरस्वती ꣳ सवितारंचवाजिनꣳ स्वाहा ॐभू० भोअर्यमन्निहा० ॐ अर्य
म्णेनमः ३७॥तद्दक्षिणाग्नेयकोणपदे दक्षिणहस्तेरक्तवर्णं सवितारं० । ॐ उपयामगृहीतोसिसावित्रोसिचनोधा
श्चनोधाऽअसिचनोमयिधेहि । जिन्वयज्ञंजिन्वयज्ञपतिं भगायदेवायत्वासवित्रे ॐभू०सवितरिहा० ॐ सवि
त्रेनमः ॥ ४८॥ तदधःपश्चिमपदत्रये जठरदक्षिणभागे शुक्लवर्णं विवस्वंतं ॐ विवस्वन्नादित्यैषतेसोमपीथस्त
स्मिन्मत्स्व श्रदस्मैनरोवचसेदधातनयदाशीर्दादंपतिर्वाममश्नुतः । पुमान्पुत्रोजायतेविंदते वस्वथाविश्वा
हारपऽएधतेगृहे । ॐभू०भोविवस्वन्निहा० ॐ विवस्वतेनमः ॥ ३९ ॥ तत्पश्चिमनैर्ऋत्यकोणपदेवृषणयोः
रक्तवर्णं विबुधाधिपं० । ॐ इंद्रंसुत्रामास्ववाँ २ ॥ अवोभिः सुमृडीकोभवतुविश्ववेदाः । बाधतांद्वेषोअभयंकृ
णोतु सुवीर्यस्य पतयः स्याम । ॐ भू० भोविबुधाधिपइहा० ॐ विबुधाधिपायनमः ॥ ४० ॥ तदुत्तरपदत्रये

जठरवामभागे श्वेतवर्णमित्रं० । ॐ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपं कृणुतेद्योरुपस्थे । अनन्तमन्यद्रु
शदस्यपाज कृष्णमन्यद्धरित संभरन्ति। ॐभू० भोमित्रइहा० । ॐ मित्रायनम ॥४१॥ तदुत्तरेकपदेवामह
स्तेरक्तराजयक्ष्माणं० । ॐ अभिगोत्राणिसहसागाहमानोऽदयोवीर शतमन्युरिन्द्र दुश्च्यवन पृतनाषाडयु
ध्योऽस्माकछं सेनाअवतुप्रयुत्सु । ॐ भू०भोराजयक्ष्मन्निहा० ॐ राजयक्ष्मणेनम ॥ ४२ ॥ तत्प्राक्पदत्र
ये वामहस्ते रक्तवर्णपृथ्वीधर० । ॐ पृथिवीछन्द अन्तरिक्षछन्द द्यौश्छन्द समाश्छद नक्षत्राणिछंद वा
कछंद मनश्छन्द कृपिश्छद हिरण्यंछन्द गोश्छन्द अजाछन्द अश्वश्छद । ॐभू० भोपृथ्वीधरइहा०
ॐ पृथ्वीधरायनम ॥ ४३ ॥ तत्प्रागीशानकोणपदे उरसिशुक्लवर्ण आपवत्सं० । ॐ आतेवत्सोमनोयमत्प
रमाच्चित्सधस्थात् अग्नेत्वांकामयागिरा । ॐ भूर्भुव स्वर्भोआपवत्स इहा० ॐ आपवत्सायनम ॥४४॥मध्ये
नवपदे वास्तोर्हृदयेनाभौचपीतश्वेतवर्णब्रह्माणं० । ॐ आब्रह्मन्ब्राह्मणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्य शूरऽइष
व्योतिव्याधीमहारथोजायतां दोग्ध्रीधेनुर्वोढानड्वानाशु सप्तिः पुरंधिर्योषाजिष्णूरथेष्ठा सभेयोयुवास्ययजमान
स्यवीरोजायतान्निकामेनिकामेन पर्जन्योवर्षतुफलवत्योनऽओषधयः पच्यन्तांयोगक्षेमोनः कल्पताम्ॐ भूर्भु

ततोमंडलस्यबा
वः स्वभौंब्रह्मन्निहागच्छइहतिष्ठ । ब्रह्माणमावाहयामिस्थापयामि ॐ ब्रह्मणेनमः ॥ ४५ ॥ ततोमंडलस्यबा
ह्ये ईशानादिकोणेषु क्रमेण चरकीं १ विदारीं २ पूतनां ३ पापराक्षसींच ४ स्थापयेत् ॥ तद्यथा ईशान्यांधूम्र
वर्णां चरकीं० । ॐ ईशावास्यमिदꣳ सर्वंयत्किंचजगत्यांजगत् । तेनत्यक्तेनभुंजीथामागृधः कस्य
स्विद्धनम् । ॐ भूर्भुवः स्वभों चरकि इहागच्छ इहतिष्ठ । ॐ चरक्यैनमः ॥ १ ॥ आग्नेयांरक्तवर्णां विदारीं०
ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे । देवाँ २ ऽआसादयादिह । ॐ भू० भो० विदारि इहा० ॐ विदार्य्यैनमः
॥ २ ॥ नैर्ऋत्यां पीतहरितवर्णांपूतनां० । ॐ नमः स्रुत्यायचपथ्यायचनमः कात्यायचनीप्यायचनमः कु
ल्यायचसरस्यायच नमोनादेयायच वैशंतायच ॐ भू० भोः पूतने इहा० ॐ पूतनायैनमः ॥ ३ ॥ वायव्ये
कृष्णवर्णांपापराक्षसीं० ॐवा०यैर्वायव्यान्याप्नोतिसतेनद्रोणकलशम् कुंभीभ्यामम्भृणौसुतेस्थालीभिःस्थाली
राप्नोति ॐ भूर्भुवःस्वभोंः पापराक्षसीइहा० ॐपापराक्षस्यैनमः॥४॥ततः पूर्वेरक्तवर्णंस्कंदम् । ॐयत्रबाणाःसं
पतंतिकुमाराविशिखाइवतन्नऽइन्द्रोबृहस्पतिरदितिः शर्म्मयच्छतु विश्वाहाशर्म्मयच्छतु । ॐ भूर्भुवःस्वभोंः
स्कंदस्कंदायनमः ॥ १ ॥ दक्षिणे कृष्णवर्णअर्यमणं बृहस्पतिमिन्द्रं दानायचोदय वाचंविष्णुꣳ सरस्वतीꣳ

सवितारञ्चवाजिनठं स्वाहा ॐ भूर्भुव स्वर्भोअर्यमन्निहा० अर्यम्णेनम ॥ २ ॥ पश्चिमेरक्तवर्णं
जृभक० । ॐ सरोभ्योधैवरमुपस्थावराभ्योदाशंवैशन्ताभ्योवैन्दं नड्लाभ्य शौष्कलपारायमागारमत्रा
राय कैवर्ततीर्थेभ्यआन्दविपमेभ्योमैनाल७ स्वनेभ्य पर्णक गुहाभ्य किरात७ सानुभ्योजम्भकंपर्व
तेभ्य किम्पुरुपम् । ॐ भूभुर्व स्वर्भोजृंमक इहा० ॐ जृंमकायनम ॥ ३ ॥ उत्तरे पीतवर्णपिलिपिच्छं०
ॐ कास्विदासीत्पूर्वचिति किंठं स्विदासीवृहद्वय ॥ कास्विदासीतिपलिप्पिला कास्विदासीतिपशङ्गिला ।
ॐ भूभुव स्वर्भो पिलिपिच्छइहागच्छ इहतिष्ठ ॐ पिलिपिच्छायनम ॥ ४ ॥ पुन पूर्वादि दिक्षु ॐ
भूर्भुव स्वर्भोगणेश इहा० ॐ गणेशायनम ॥ १ ॥ दक्षिणे ॐ भूर्भुव स्वर्भोदुर्गे इहा० ॐ दुर्गायैनम २॥
पश्चिमे० ॐ भूर्भुव स्वर्भोवायो इहा० ॐ वायवेनम ॥ ३ ॥ उत्तरे ॐ भूर्भुव स्वर्भो विभत्स इहा० ॐ
विभत्सायनम ॥ ४ ॥ पुन॑ पूर्वे । ॐ भू० उग्रसेन इहा० ॐ उग्रसेनायनम ॥ १ ॥ दक्षिणे ॐ भू० डामर
इहा० ॐ डामरायनम ॥ २ ॥ पश्चिमे भू० महाकाल इहा० ॐ महाकालायनम ॥ ३ ॥ उत्तरे ॐ भूर्भुव
स्वर्भो अश्विनो इहागच्छतं० ॐ अश्विभ्यांनम ॥ ४ ॥ पुन पूर्वादि अष्टदिक्षु । पूर्वे ॐ भूर्भुवः स्वर्भो

इंद्र इहागच्छ इहतिष्ठ ॐ इंद्रायनमः ॥ १ ॥ आग्नेय्यां० ॐ भूर्भुवः स्वर्भो अग्ने इहा० ॐ अग्नये नमः
॥ २ ॥ दक्षिणे भू० यम इहा० ॐ यमाय नमः ॥ ३ ॥ निर्ऋतौ ॐ भू० निर्ऋते इहा० ॐ निर्ऋतये नमः
॥ ४ ॥ पश्चिमे ॐ भूर्भुवः स्वर्भोवरुण इहा० ॐ वरुणाय नमः ॥ ५ ॥ वायव्यां ॐ भू० भोवायो इहा०
ॐ वायवे नमः ॥ ६ ॥ उत्तरे ॐ भू० भो कुबेर इहा० ॐ कुबेराय नमः ॥ ७ ॥ ईशान्यां ॐ भूर्भुवः स्वर्भो
ईशान इहा० ॐ ईशानाय नमः ॥ ८ ॥ ईशानपूर्वयोर्मध्ये ॐ भू० रुद्र इहा० ॐ रुद्राय नमः ॥ ९ ॥ निर्ऋ
तिपश्चिमयोर्मध्ये ॐ भूर्भुवः स्वर्भोभूमे इहागच्छ इहतिष्ठ । ॐ भूम्यै नमः ॥ १० ॥ एवंशिख्यादिदेवाना
वाह्य।ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमंतनोत्वरिष्टं यज्ञꣳ०समिमन्दधातु विश्वेदेवासऽइहमा
दयन्तामो३ २ प्रतिष्ठ ॥ १ ॥ एषवैप्रतिष्ठानाम० २ इतिप्रातिष्ठाप्य पीठे अक्षतान् विकीर्य ॐवास्तुपीठदेवता
भ्यो नम इतिप्रणमेत् । ततोमंडलादीशान्यामुत्तरे वा ताम्रकलशंमृण्मयकलशंवास्थापयेत् । तद्यथा । महीद्यौ
रितिभूमिंस्पृष्ट्वा । ॐमहीद्यौः पृथिवीचनऽइमंयज्ञम्मिमिक्षिताम् ।.पिपृतान्नोभरीमभिः ॥ १ ॥ ओषधयःस
मिति यवान्क्षिप्त्वा । ॐ औषधयःसमवदंतसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तꣳ०राजन्पारयामसि २

आजिघ्रमितिकलशंस्थापयेत् । ॐआजिघ्रकलशम्मह्यात्वाविशन्त्विन्दव' । पुनरूर्जानिवर्तस्वसान सहस्र
धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयि ॥ ३ ॥ वरुणस्योत्तभनमितिजलपूरयेत् । ॐवरुणस्योत्तम्भन
मसि० ॥ ४ ॥ गंधद्वारामितिगंधप्रक्षिपेत् । ॐगंधद्वारांदुराधर्षां० ॥ ५ ॥ याओषधीरितिसर्वौषधी ॐयाऽ
ओषधीः पूर्वाजातादेवेभ्यस्त्रियुगम्पुरा । मनैनुबभ्रूणाहर्ठ॰शतधामानिसप्तच. ॥ ६ ॥ अश्वत्थेवेतिपञ्चपल्ल
वान् । ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता । गोभाजऽइत्किलासथयत्सनवथपुरुषम् ॥७॥ स्योनापृथि
वीतिसप्तमृदः । ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छान शर्म्मसप्रथा ॥ ८ ॥ या फलिनीरिति
फलं० । ॐ या फलिनीर्याऽअफलाऽअपुष्पायाश्च पुष्पणी ।बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वर्ठ॰हस ॥ ९ ॥ परि
व्वाजपतिरितिपंचरत्नानि०' । ॐ परिव्वाजपति कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानिदाशुषे॥१०॥ हिरण्य
गर्भेतिहिरण्यं० ।ॐहिरण्यगर्भ सम० ॥११॥ युवासुवासाइतिरक्तवस्त्रेण वेष्टयेत् । ॐ युवासुवासाः परिवीत
ऽआगात्सऽउश्रेयान्भवतिजायमान । तधीरा स कवयऽउन्नयन्तिस्वाध्योमनसादेवयन्त ॥१२॥ पूर्णादर्वी
तिपूर्णपात्रमुपरिन्यसेत् । ॐपूर्णादर्विपरापतसुपूर्णापुनरापत।वस्नेवविक्रीणावहाऽइषमूर्जर्ठ॰शतक्रतो॥१३॥

श्रीश्चतेलक्ष्मीश्चेतिश्रीफलं पूगीफलं वा संस्थाप्य।ॐ मनोजूतिर्जुषवेतिप्रतिष्ठांकृत्वा तत्र। ॐ तत्वायामिब्र ह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः॥अहेडमानोवरुणेहबोध्युरुशꣳस समानऽआयुःप्रमोषीः। ॐ वरुणं सांगं सपरिवारमावाहयामि।ॐभूर्भुवः स्वर्भोवरुण इहागच्छ इहतिष्ठ इत्यावाह्य। ॐअपांपतिवरुणायनमः इति षोडशोपचारैःसंपूजयेत्। ततोगङ्गाद्यावाहनं। सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः। आयांतुममशांत्यर्थं दुरितक्षयकारकाः॥ १ ॥ततःकलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः। मूलेतस्यस्थितोब्रह्मामध्येमातृगणाःस्मृ ताः१ ॥कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा।ऋग्वेदोथयजुर्वेदः सामवेदोप्यथर्वणः॥२॥अंगैश्चसहिताःसर्वेकल शंतु समाश्रिताः। इत्याभिमंत्र्य। देवदानवसंवादेमथ्यमानेमहोदधौ ॥ ३ ॥ उत्पन्नोसितदाकुंभविधृतोविष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ ४ ॥ त्वयितिष्ठंतिभूतानि त्वयिप्राणाःप्रतिष्ठिताः। शिवः स्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥५॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैत्रिकाः॥ त्वयितिष्ठंति सर्वेपियतः कामफलप्रदाः ॥६॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव । सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा ॥ ७ ॥ इति कलशंप्रार्थ्य तस्योपरिसुवर्णमयीं कृकलासाकारस्वरूपां वास्तुप्रतिमामग्न्युत्तारणपूर्वकंसन्निधाय पल्लवैरा।

च्छाद्य ततस्तंसकलदेवाधिष्ठितावयवमधोमुखमीशानकोणशिरसनैर्ऋत्यकोणस्थितपादं चययाकारवास्तुपु
रुषंध्यायेत्। अभ्युत्तारणमंत्रा प्राणप्रतिष्ठामंत्रास्तु पूर्वमुक्ता ।तत । वास्तोष्पतेइतिमंत्रस्यवासिष्ठऋषि।त्रि
ष्टुपछंदोवास्तुदेवताप्रवास्तुस्थापनेविनियोग । ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोऽअनमीवोभवा
न । यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशञ्चतुष्पदे १ ॐ भूर्भुव स्व भोवास्तुपुरुष महाबलपराक्रम
सर्वदेवाश्रितशरीर ब्रह्मपुत्र सकलब्रह्माण्डधारिन् भगवन्निहागच्छ इहतिष्ठ । आगच्छभगवन्वास्तोसर्वदेवैर
धिष्ठित । भगवन्कुरुकल्याणंगृहेस्मिन्सन्निधोभव ॥ १ ॥ ॐ वास्तुपुरुष इहस्वागतोभव सुप्रसन्नोभव वरदो
भव इत्यावाह्य । ततोंगदेवता शिख्यादीन् प्रत्येक प्रणवादिनमोन्तेनमंत्रेणगंधादिभिर्मिलितोपचारैर्यथोक्त
प्रकारेण वा एकत्रकांडानुसमयेन पदार्थानुसमयेन वा पूजयेत्। तद्यथा।ॐशिखिने नम इदंपाद्यम् ।एषो
ऽर्घं । इदमाचमनीयम् । इदंस्नानम् । इदंवस्त्रम् । इदंगंधम् । एतानक्षतान् । इमानिपुष्पाणि एषधूप एषदी
प । एतानिनानाविधानिनैवेद्यानि । इदमाचमनीयम् इदंताम्बूलम्।इमां दक्षिणां च समर्पयामि। एवंप्रयोगेण
शिखिनंसपूज्य क्रमेणपर्जन्यादीन्संपूजयेत् १ ॐ पर्जन्यायनमः २ ॐ जयंतायनमः ३ कुलिशायुधायन

मः ४ ॐ सूर्याय० ५ ॐ सत्याय० ६ ॐ भृशाय० ७ ॐ आकाशाय० ८ ॐ वायवे० ९ ॐ पूष्णे० १०
ॐ वितथाय० ११ ॐ गृहक्षताय० १२ ॐ यमाय० १३ ॐ गंधर्वाय० १४ ॐ भृंगराजा० १५ ॐ मृगा०
१६ ॐ पितृभ्यो० १७ ॐ दौवारिकाय० १८ ॐ सुग्रीवाय० १९ ॐ पुष्पदंताय० २० ॐ वरुणाय० २१
ॐ असुराय० २२ ॐ शोकाय० २३ ॐ पापाय० २४ ॐ रोगाय० २५ ॐ अहये० २६ ॐ मुख्याय० २७
ॐ भल्लाटाय० २८ ॐ सोमाय० २९ ॐ सर्पाय० ३० ॐ अदितये० ३१ ॐ दितये० ३२ ॐ अद्भ्यो० ३३
ॐ सावित्राय० ३४ ॐ जयाय० ३५ ॐ रुद्राय० ३६ ॐ अर्यम्णे० ३७ ॐ सवित्रे० ३८ ॐ विवस्वते० ३९
ॐ विबुधाधिपाय० ४० ॐ मित्रायनमः ४१ ॐ राजयक्ष्मणे० ४२ ॐ पृथ्वीधराय० ४३ ॐ आपवत्सा
य० ४४ ॐ ब्रह्मणेनमः ४५ मण्डलबाह्ये ॐ चरक्यैनमः १ ॐ विदार्यै० २ ॐ पूतनायै० ३ ॐ पापरा
क्षस्यै० ४ ॐ स्कंदायनमः १ ॐ अर्यम्णेनमः २ ॐ जृंभकाय० ३ ॐ पिलिपिच्छाय० ४ ॐ गणेशाय० ५
ॐ दुर्गायै० ६ ॐ वाताय० ७ ॐ बिभत्साय० ८ ॐ उग्रसेनाय० ९ ॐ डामराय० १० महाकालाय० ११
ॐ अश्विभ्यांनमः १२ ॐ इंद्राय० १ ॐ अग्नये० २ ॐ यमाय० ३ ॐ निर्ऋतये० ४ ॐ वरुणाय० ५ ॐ

वायवे० ६ ॐ कुबेराय० ७ ॐ ईशानायनम ८ ॐ रुद्रायनम ९ ॐ भूम्यैनम १० एव वास्तुमंडलदेवता
नांपूजनकृत्वा। इदस्थापितदेवताभ्यो इमानिगधाक्षतपुष्पधूपदीपाच्छादननैवेद्यतांबूलदक्षिणादीनि सम
र्पयामिनम । यथाविभागपूजनव स्वाहानमम इतिजलमुत्सृजेत् । इत्यंगदेवता सपूज्य क्षमाप्य प्रधानवा
स्तुपुरुप पुरुपसूक्तेनपाडशोपचारे सपूजयेत्॥ एवपूजयित्वाबलिदानकुर्यात्। ॐ एह्येहिभगवन्वास्तो
इमंमयोपनीतबलिंगृहाणममगृहमच्छिद्रंकुरु सकलदुष्टग्रहभूतपिशाचवेतालब्रह्मराक्षसेभ्योरक्षरक्षस्वाहा
इतिमन्त्रेणसर्वांबूलदक्षिणाकबलिंदत्वाप्रार्थयेत्। यज्ञमागप्रतीक्षस्वपूजांचैवबलिंमम । नमोनमस्तेदेवेशमम
स्वस्तिकरोभव। इतिप्रार्थ्यहस्तोपादोप्रक्षाल्यासनेउपविश्याचम्य अर्घ्यदानकुर्यात् ॐ पूज्योसित्रिपुलोके
पु यज्ञरक्षार्थहेतवे।त्वद्विनाचनासिध्यंतियज्ञदानान्यनेकश ॥१॥अयोनेभगवन्भर्गललाटस्वेदसभव। गृहाणा
र्घ्यंमयादत्त वास्तोस्वामिन्नमोऽस्तुते ॥ २ ॥ इत्यर्घ्यंदत्त्वा । मंत्रहीनं क्रियाहीनं भक्तिश्रद्धासमन्वित
म् । यत्पूजितमयादेवपरिपूर्णतदस्तुमे ॥ १ ॥ नमस्तेवास्तुदेवेशसर्वविघ्नहरोभव । शांतिकुरुसुखंदेहिसर्वा
न्कामान्प्रयच्छमे ॥ २ ॥ इतिप्रणमेत् अथहोम । तत्रतावत् । आचार्योब्रह्मोपवेशनादिसमिद्धोमांतं

कुशकण्डिकाकर्मसमाप्यपायसचरुंश्रपयित्वाआज्यभागांते कुंडदक्षिणतोयजमानउपविश्यजलमादाय ।
ॐ अस्मिनवास्तुशांतिकर्मणि इदंहविः सूर्यादिग्रहेभ्यईश्वराद्यधिदेवताभ्योऽग्न्यादिप्रत्यधिदेवताभ्यो
गणेशादिपंचलोकपालेभ्य इंद्रादिदिक्पालेभ्यः शिख्यादिपिलिपिच्छांताभ्यस्त्रिपंचाशद्वास्तुदेवताभ्यः
शेषेणस्विष्टकृदादिपूर्वोत्तरांगदेवताभ्यश्चनममयथादैवतमस्त्वितिद्रव्यत्यागंकुर्यात् ॥ ततआचार्यादयः
सूर्यादिनवग्रहेभ्यः क्रमेणपूर्वोक्तार्कादिसमिच्चरुतिलाज्यद्रव्यैरष्टाष्टसंख्ययाहुत्वा ॥ तेनैवद्रव्येणअ
धिप्रत्याधिदेवताभ्यश्चतुश्चतुःसंख्यया हुत्वा विनायकादिदिक्पालान्तेभ्यश्चपलाशोदुंबरान्यतमसमिच्चरु
तिलाज्यद्रव्येणद्विद्विसंख्ययाजुहुयुः । ततोवास्तुदेवानांहोमः । तावत् आज्याहुतयः । ॐ इहरतिरिहरम
ध्वमिहधृतिरिह स्वधृतिः स्वाहा इदमग्नये०। ॐउपसृजंधरुणं मात्रे धरुणोमातरं धयन्॥ रायस्पोषमस्मासु
दीधरत्स्वाहा इदमग्नये० । ततः शिख्यादिभ्यः प्रणवादि स्वाहांतैस्तत्तदावाहनोक्तवैदिकैर्मंत्रैर्वानाममंत्रैः
प्रत्येकमष्टाविंशतिर्वाष्टावाहुतीः समित्तिलपायसैर्जुहुयात् । अत्रसमिध औदुंबरस्यमुख्याः । तदभावे अ
श्वत्थादीनामपि सर्वाः समिधो मधुघृतक्षीरैर्युक्ताहोतव्याः । तिलाः कृष्णाएव । पयोगोरेव ।ॐ शिखिनेस्वाहा

१ इदंशिखिनेनमम। २८।८। ॐपर्जन्यायस्वाहा २ इदं पर्जन्यायनमम २८।८। ॐजयंतायस्वाहा ३ इदं जयंतायनमम॥ २८।८। ॐ कुलिशायुधायस्वाहा ४ इदं० २८।८। ॐ सूर्याय स्वाहा ५ इद० २८।८। ॐ सत्यायस्वाहाइद० ६ ॐभृशायस्वाहाइदं० ७ ॐआकाशायस्वाहाइदं० ८ ॐवायवेस्वाहाइद० ॥ ९ ॥ ॐपूष्णेस्वाहाइदं० १० ॐवितथायस्वाहाइदं० ११ ॐगृहक्षतायस्वाहाइदं० १२ ॐयमायस्वाहाइदं० १३ ॐगन्धर्वायस्वाहाइदं० १४ ॐ भृंगराजायस्वाहाइदं० १५ ॐमृगायस्वाहाइदं० १६ ॐपितृभ्य स्वाहाइदं० १७ ॐदौवारिकायस्वाहाइद० १८ ॐसुग्रीवायस्वाहाइदं० १९ ॐपुष्पदंतायस्वाहाइदं० २० ॐ वरुणायस्वाहाइदं० २१ ॐअसुरायस्वाहाइं० २२ ॐशोकायस्वाहाइद० २३ ॐपापायस्वाहाइदं० २४ ॐरोगायस्वाहाइद० २५ ॐ अहयेस्वाहाइद० २६ ॐ मुख्यायस्वाहाइद० २७ ॐ भल्लाटायस्वाहाइदं० २८ ॐसोमायस्वाहाइदं० २९ ॐसर्पायस्वाहाइदं० ३० ॐअदितयेस्वाहाइदं० ३१ ॐदितयेस्वाहाइदं ३२ ॐअद्भ्यस्वाहाइदं० ३३ ॐसावित्रायस्वाहाइदं० ३४ ॐजयायस्वाहाइदं० ३५ ॐरुद्रायस्वाहाइदं० ३६ ॐअर्यम्णेस्वाहाइद० ३७ ॐसवित्रेस्वाहाइदं० ३८ ॐविवस्वतेस्वाहाइदं० ३९ ॐविबुधाधिपायस्वाहा इदं० ४०

ॐमित्राय स्वाहा इदं ४१ ॐराजयक्ष्मणे स्वाहा इदं० ४२ ॐपृथ्वीधरायस्वाहाइदं० ४३ ॐ आपवत्साय
स्वाहाइदं० ४४ ॐब्रह्मणेस्वाहा ४५ इदंब्रह्मणे २८।८। ॐचरक्यैस्वाहाइदं० १ ॐ विदार्यैस्वाहाइदं० २
ॐपूतनायैस्वाहाइदं० ३ ॐपापराक्षस्यैस्वाहाइदं० ४ ॐस्कंदायस्वाहाइदं० ५ ॐ अर्यम्णेस्वाहाइदं० ६
ॐजृंभकायस्वाहाइदं० ७ ॐपिलिपिच्छायस्वाहाइदं० ८ ॐगणेशायस्वाहाइदं० ९ ॐदुर्गायैस्वाहाइदं० १०
ॐवातायस्वाहाइदं० ११ ॐ बिभत्सायस्वाहाइदं० १२ ॐ उग्रसेनायस्वाहाइदं० १३ ॐ डामरायस्वा
हाइदं० १४ ॐमहाकालायस्वाहाइदं० १५ अश्विभ्यांस्वाहाइदं० १६ ॐइंद्रायस्वाहाइदं० १७ ॐअग्नये
स्वाहाइदं० १८ ॐयमायस्वाहाइदं० १९ ॐनिर्ऋतयेस्वाहाइदं० २० ॐवरुणायस्वाहाइदं० २१ ॐवायवे
स्वाहाइदं० २२ ॐकुबेरायस्वाहाइदं० २३ ॐईशानायस्वाहाइदं० २४ ॐरुद्रायस्वाहाइदं० २५ ॐभूम्यै
स्वाहाइदंभूम्यै० २६ ततोहस्तेजलमादायअनेनहोमेनाशिख्यादथोवास्तुदेवताःप्रीयंतामित्युत्सृजेत्। अथप्र
धानवास्तुहोमः॥ तत्रवास्तोष्पतयेतैरेवसमित्तिलपायसाज्यैरष्टोत्तरशतमाहुतीर्जुहुयात्। चतुर्भिर्मंत्रैस्तत्रैकै
केनमंत्रेणसप्तविंशतिराहुतयरेवमष्टोत्तरशतं। तद्यथा। वास्तोष्पते इतिचतुर्णांवसिष्ठ ऋषिर्वास्तोष्पतिर्देव

ता । त्रयाणां त्रिष्टुप्छंदोंत्यस्यगायत्रीछंदोहोमेविनियोगः । ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोऽअन
मीवोभवान ॥ यत्त्वेमहेप्रतितन्नोजुपस्वशन्नोभवद्विपदेशं चतुष्पदे स्वाहा इदं वास्तोष्पतयेनमम।१।२७॥
ॐवास्तोष्पते प्रतरणोनऽएधिगयस्फानोगोभिरश्वेभिरिन्दो॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिवन्नो
जुपस्वशन्नोभवद्विपदे शञ्चतुष्पदे स्वाहा इदं वास्तोष्पतये २।२७ ॥ ॐवास्तोष्पतेशग्मयासर्ठ्ंसदातेसक्षीम
हिरण्वयागातुमत्या॥पाहिक्षेमऽउतयोगेवरन्नोयूयंपात स्वस्तिभि सदान' स्वाहा इदं वास्तोष्पतये ३ । २७
ॐअमीवहावास्तोष्पते विश्वारूपाण्याविशन् ॥ सखासुशेवऽएधिन स्वाहा इदं वास्तोष्पतये४।२७। १०८॥
तत स्थालीपाकेनषडाहुतय ॥ ॐ अग्निमिन्द्रंबृहस्पतिं विश्वान्देवानुपह्वये सरस्वतींचवाजिनंचवास्तुमेद
त्वाजिन स्वाहाइदमग्नये इंद्रायबृहस्पतये विश्वेभ्यो देवेभ्य- सरस्वत्ये वाजिनेचनमम१ ॐसर्पदेवजनान्त्स
र्वान् हिमवंतर्ठं सुदर्शनम् ॥ वसूंश्चरुद्रानादित्यानीशानंजगदै सह॥एतान्त्सर्वान्प्रपद्येऽहं वास्तु मेदत्तवाजि
न स्वाहा ॥ इद सर्पदेवजनेभ्योहिमवतेसुदर्शनायवसुभ्यो रुद्रेभ्य आदित्येभ्यः ईशानायजगदेभ्यश्च
नमम ॥२॥ ॐ पूर्वाह्नमपराह्नञ्चोभौमध्यंदिना सह ॥ प्रदोषमर्द्धरात्रञ्च व्युष्टांदेवीं महापथां एतान्त्सर्वान्

प्रपद्येऽहं वास्तुमेदत्तवाजिनः स्वाहा । इदं पूर्वाह्णायापराह्णायप्रदोषायअर्धरात्राय व्युष्टायैदेव्यैमहापथायैच
नमम३ॐकर्त्तारंचविकर्त्तारं विश्वकर्माणमोषधीश्चवनस्पतीन्॥एतान्सर्वान्प्रपद्येऽहंवास्तुमेदत्तवाजिनः॥स्वा
हा॥इदंकर्त्रे विकर्त्रे विश्वकर्मणेओषधीभ्योवनस्पतिभ्योनमम४ॐधातारंचविधातारं निधीनांचपतिं सह॥
एतान्सर्वान्प्रपद्येऽहं वास्तुमेदत्तवाजिनः स्वाहा॥इदं धात्रेविधात्रेनिधीनांपतयेचनमम५ॐस्योनं शिवमिदं
वास्तुदत्तं ब्रह्मप्रजापतीसर्वाश्चदेवताः स्वाहा॥इदंब्रह्मणेप्रजापतये सर्वाभ्यो देवताभ्यश्चनमम६ततोवास्तोष्प
तेइत्युक्तैश्चतुर्भिर्मंत्रैरेकेनवक्ष्यमाणेन च प्रतिमंत्रमेकैकंबिल्वंतद्बीजंवाजुहुयात्॥अथपंचमंघृताक्तंबिल्वंगृही
त्वा ।वास्तोष्पतेध्रुवस्थूणामितिमंत्रस्यवसिष्ठऋषिर्वास्तोष्पतिर्देवताबृहतीछंदोहोमेविनियोगः।ॐ वास्तोष्प
तेध्रुवस्थूणांसत्रं सोम्यानां ।द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखाशन्नोभवद्विपदेशंचतुष्पदेस्वाहा ।
इदं वास्तोष्पतये ५ इतिहस्तेनजुहुयात् । ततः पुनः शिख्यादिभ्योयथाशक्त्याज्याहुतीर्जुहुयात् । अनेनहो
मेनवास्तुदेवताःप्रीयंतामितिजलमुत्सृजेत् । इतिवास्तुदेवानांहोमः । अथ अघोरमंत्रेणवास्तुमर्मसंधानाय
तिलयवैर्मधुघृताक्ताभिरष्टोत्तरशतमष्टाविंशतिंवाजुहुयात्।ॐअघोरेभ्योऽथघोरेभ्योघोरघोरतरेभ्यः॥सर्वेभ्यः

सर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यःस्वाहा१०८पश्चात्श्रीसूक्तेनफलहोम गुग्गुलुहोम । एवंहोमसमाप्याग्ने
स्थापितदेवतानांचोत्तरपूजनकार्यम्।ततः 'स्थालीपाकेनस्विष्टकृद्धोमकृत्वा' ततोमहाव्याहृत्यादिप्राजापत्या
न्तानाज्याहुतीर्हुत्वावास्तुमंडलाग्रेवक्ष्यमाणवलीन्दद्यात्।तद्यथा ।'पायसादिद्रव्यगृहीत्वा। ॐ शिखिनेएष
पायसबलिर्नमम १ ॐ पर्जन्यायएषपायसबलिर्नमम २।ॐ जयतायएषपायसबलिर्नमम' ३ ॐ कुलिशायु
धायएषपायसबलिर्नमम ४ ॐ सूर्यायएषपायसबलिर्नमम ५ इत्येवप्रयोगेणशिख्यादिमंडलस्थापितदेव
ताभ्योबलीन्दत्वा ।।अग्न्यायतनस्यसमंताद्दिक्षुविदिक्षुचदशदिक्पालानांदधिमाषभक्तबलयोदेया । ततोग्रहवे
दीसमीपे ग्रहाणांवलीन्दत्वा पश्चादेकस्मिन्पात्रेदध्योदनदीपरक्तचंदनरक्तपुष्पाक्षताज्यगुडकुल्माषपयाव
कापूपवालक्रीडनकदाडिमफलरूप्यसुवर्णानि कृत्वा ।।स्वर्गपातालमर्त्येषुयेदेवावास्तुसंभवाः।।। गृह्णंत्विमंव
लिंह्यंतुष्टायांतुस्वमंदिरं'१ मातरोभूतवेताला येचान्येबलिकांक्षिणः।विष्णोः पारिषदायेचतेपिगृह्णंत्विमंवलि
म्२ पितृभ्यः क्षेत्रपालेभ्योयेचान्येभैरवादयः।तेसर्वेतृप्तिमायांतुवास्तुदोषः प्रणश्यतु ३ इतिपठित्वावास्तुवे
दिसमीपेबलिंदद्यात्।ततः पूर्ववत् क्षेत्रपालायचतुष्पथेसबलिदानंकृत्वा हस्तौपादौप्रक्षाल्याचामेत् । ततः पू

र्णाहुतिहोमः त्र्यायुषकरणम् । संस्रवप्राशनम् । पवित्राभ्यांमार्जनम् । अग्नौपवित्रप्रतिपत्तिः । ब्रह्मणेपूर्णपा
त्रदानम् । प्रणीताविमोकंचपूर्ववत्कृत्वाहोमंसमापयेत् । ततः कांस्यपात्रे अनुपहते उदुंबरपत्राणिसक्षीरा
णिशाड्वलंदूर्वागोमयंदधिमधुघृतकुशयवांश्चसमभागान्कृत्वा आसनोपस्थानेषुप्रोक्षणंकुर्यात् । ततः पूर्वसं
धौ ॐ श्रीश्चत्वायश्चपूर्वे संधौगोपायेतां इतिमंत्रेणाभिमर्शनंकरोति । ततोदक्षिणेसंधौ ॐ यज्ञश्चत्वादक्षि
णाचदक्षिणेसंधौ गोपायेतां इति अनंतरं पश्चिमेसंधौ अन्नंचत्वा ब्राह्मणश्चपश्चिमेसंधौगोपायेताम् । अथोत्त
रेसंधावभिमृशति । ॐ उर्कचत्वासूनृताचोत्तरेसंधौगोपायेताम् ४ इतिचतुर्दिक्षुप्रोक्षयेत् । अथगृहान्निष्क्रम्य
पूर्वदिशिउपतिष्ठते तत्रमंत्रः।ॐ केताचमासुकेताचपुरस्ताद्गोपायेतामित्यग्निर्वैकेतादित्यः सुकेतातौप्रपद्येता
भ्यांनमोस्तुतौमापुरस्ताद्गोपायेताम् १ । अथदक्षिणदिश्युपतिष्ठते । दक्षिणतोगोपायमानं चमारक्षमाणाच
दक्षिणतोगोपायेतामित्यहर्वै गोपायमानᳬ रात्रीरक्षमाणातेप्रपद्येताभ्यांनमोस्तुतेमादक्षिणतोगोपायेतामि
ति २ अथपश्चिमदिश्युपतिष्ठते । अथपश्चाद्दीदिविश्चमाजागृविश्चपश्चात् गोपायेतामित्यन्नंवैदीदिविःप्राणो
जागृविस्तौप्रपद्येताभ्यांनमोस्तुतौमापश्चाद्गोपायेतामिति ३ अथोत्तरदिश्युपतिष्ठते । अथोत्तरतोऽस्वप्नश्च

मानवद्राणश्चोत्तरतोगोपायेतामितिचंद्रमावाअस्वभोवायुरनद्राणस्तोप्रपद्येताभ्यां नमोस्तुतौमोत्तरतोगोपा
येतामिति ४ ततोगीतवादित्रादिबन्धुजने सहगृहे आगत्य द्वारशालाया घृतेनवसोर्द्धारांकुर्यात् ।
ततोवास्तुमंडले ब्रह्मस्याने सुरूपांदिव्याभरणभूषितांस्त्रीरूपांपृथिवींदेवींध्यात्वा ॐ धरायैनम इतिमंत्रेणप्र
पूजयेत् । सर्वदेवमयं वास्तुवास्तुदेवमयंपरमितिपठेत् । ततोगृहंभागादितास्त्रिगुणीकृतरक्तसूत्रेणराक्षोघ्नेनसूं
क्तेनपावमानेनचवेष्टयेत् छिन्नेसूत्रेऽशुभम् । ततोदुग्धपूर्णया तथैवजलपूर्णयाचस्तनकुम्भ्यापूर्वोक्तसूक्तद्वयेन
ऋचंवाचमित्यनेनचधाराद्वयं अविच्छिन्नंकुर्यात् ॐकृणुष्वपाज प्रसितिन्नपृथ्वींयाहिराजेवामवाँ २ ऽइभेन ॥
तृष्वीमनुप्रसतिन्द्रूणानोस्तासिविध्यरक्षसस्तापिष्ठै १तवभ्रमासऽआशुयापतंत्यनुस्पृशधृषताशोशुचान ।तपूं
ष्यग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्का २ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्विशोऽअस्याऽअदब्ध
योनोदूरेऽअघशंसोयोऽअन्त्यग्नेमाकिष्टे व्यथिरादधर्षीत् ३ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ२ऽ ओषतात्ति
ग्महेते ॥ योनोऽअरातिंसमिधानचक्रेनीचातंधक्ष्यतसन्नशुष्कम् ४ ऊर्ध्वोभवप्रतिविद्ध्याध्यस्मदाविष्कृणु
ष्वदैव्यान्यग्ने ॥ अवस्थिरातनुहियातुजूनांजामिमजामिम्प्रमृणीहिशत्रून् । अग्नेष्ट्वातेजसासादयामि ५ इति

पुनन्तुविश्वाभूतानि जातवेदः पुनीहिमा। आप्या
राक्षोघ्नसूक्तम्। ॐ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः। शिरोमेश्रीर्यशोमुखंत्विषिः केशाश्चश्मश्रूणि॥राजा
यस्वसमेतुतेविश्वतः सोमवृष्ण्यम्॥भवावाजस्यसङ्गथे २ जिह्वामेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाः
मेप्राणोऽअमृतꣳ सम्राड्चक्षुर्विराट्श्रोत्रम् ३ बाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्यम् ॥ आत्माक्षत्त्रमुरोमम ५ पृ-
प्रमोदाऽअंगुलीरंगानिमित्रम्मेसहः ४ ऊरूऽअरत्नीजानुनीविशोमेंगानिसर्वतः ६ नाभिर्मेचित्तंविज्ञानम्पायु
ष्ठीम्मेंराष्ट्रमुदरꣳसौग्रीवाश्चश्रोणी ॥ जंघाभ्यांपद्भ्यांधर्मोस्मिविशिराजाप्रतिष्ठितः ७
र्म्मेपचिर्भसत् ॥ आनंदनंदावांडौमेभगः सौभाग्यंपसः पयस्वतीः प्रदिशः संतुमह्यम् ८ इति पावमानसूक्तम्।
पयःपृथिव्यांपयओषधीषुपयोदिव्यन्तरिक्षेपयोधाः॥ श्रोत्रम्प्रपद्येवागोजःसहोजोमयिप्राणापानौ १ य
ॐऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुः शन्नोभवतुभुवनस्यपस्पतिः २ भूर्भुवः
न्मेच्छिद्रञ्चक्षुषोहृदयस्यमनसो वातितृणम्बृहस्पतिर्म्मेतद्दधातु ॥ कयाशचिष्ठयावृता ४ कस्त्वासत्योमदा
स्वःतत्सवितुर्वरेण्यं० ३ कयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥

नाम्मर्ठंहिंष्ठोमत्सुदन्धस ॥ दृढाचिदारुजेवसु ५ अभीषुण सखीनामविताजरितृणाम् ॥ शतम्भवास्यूति
भिः ६ कयात्त्वन्नऽऊत्याभिप्रमन्दसेवृषन ॥ कयास्तोतृभ्यऽआभर ७ इन्द्रोविश्वस्यराजति शन्नोऽअस्तु
द्विपदेशञ्चतुष्पदे ८ शन्नोमित्र शंवरुण शन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिः शन्नोविष्णुरुरुक्रम ९ शन्नो
वात पवताᳪशन्नस्तपतुसूर्य्य शन्नःकनिक्रदद्देव पर्ज्जन्योऽअभिवर्षतु १० आहानिशम्भवन्तुन शᳪरात्री
प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवतामवोभि शन्नऽइन्द्रावरुणारातहव्या शन्नऽइन्द्रापूषणावाजसातौशमि
न्द्रा सोमासुवितायशंय्योः ११ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये॥ शंय्योरभिस्रवन्तुन १२ स्योनापृथिवि
नोभवानृक्षरानिवेशनी ॥ यच्छान शर्मसप्रथा १३ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणाय
चक्षसे १४ योवःशिवतमोरसस्तस्यभाजयतेहन ॥ उशतीरिवमातर १५ तस्माऽअरङ्गमामवोयस्यक्षयाय
जिन्वथ ॥ आपोजनयथाचन १६ द्यौःशान्तिरन्तरिक्षᳪशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयः शा

शान्तिर्ब्रह्मशान्तिःसर्वंꣳ शान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि १७
तिर्वनस्पतयः शांतिर्विश्वेदेवाः
मित्रस्याहञ्चक्षुषासर्वाणिभूतानिसमीक्षे। मित्रस्य
दृतदृꣳहमामित्रस्यमाचक्षुषासर्वाणिभूतानिसमीक्षन्ताम्॥
नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे
चक्षुषासमीक्षामहे १८ दृतेदृꣳहमाज्योक्तेसन्दृशिजीव्यासम् १९
शिवोभव २० नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयित्नवे
षे।अन्यांस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यꣳ
॥नमस्तेभगवन्नस्तुयतः स्वःसमीहसे २१ यतोयतःसमीहसेततोनोऽअभयंकुरु॥शन्नःकुरुप्रजाभ्योभयन्नःप
शुभ्यः२२सुमित्रियानऽआपऽओषधयःसन्तुदुर्मित्रियास्तस्मै सन्तुयोस्मान्द्वेष्टियञ्चवयन्द्विष्मः२३तच्चक्षुर्दे
वहितम्पुरस्ताच्छुक्रमुच्चरत्॥ पश्येमशरदःशतञ्जीवेमशरदः शतꣳ शृणुयामशरदःशतंप्रब्रवामशरदः शत
मदीनाःस्यामशरदः शतम्भूयश्चशरदःशतात् २४ इतिऋचंवाचंसूक्तम्॥ततोयजमानःस्थिरेलग्ने स्थिरांशेवाग्र
हस्याग्नेयकोणेआकाशपदेजानुपरिमितखातंखात्वातंगोमयेनोपलिप्य शुक्लचंदनपुष्पाक्षतादिभिरलंकृत्य ।
शाल्यादिसप्तधान्यानिदध्योदनसुवर्णशैवालतृणानिचप्रक्षिप्य । ततोनवंकुंभमेकजलपूर्णं शुक्लगंधाक्षतपु

ष्पादिभिरर्चित यजमानोऽस्तद्वयेनादायजानुभ्यामवनींगत्वाॐनमोवरुणाय इतितज्जलेनखातपूरयेत्।तत
ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऋतसदनमसिवरुणस्य
ऽऋतसदनमासीद १ वरुण प्राविताभुवमित्रोविश्वाभिरूतिभि करतांन सुराधस २ उरुंहिराजावरुणश्चका
र० ३ इमम्मेवरुणश्रुधीहवमद्याचमृडय । त्वामवस्युराचके ४ इतिमन्त्रैर्गर्तमभिमन्त्रयेत्तत्रावर्तेप्रदक्षिणेपुष्पेचो
र्ध्वमुखेशुभम् । वैपरीत्येत्वशुभम् । ततोमृन्निर्मितपेटिकायां सप्तधान्यदध्योदनशैवालफलपुष्पाणिप्रक्षिप्य
तूर्यघोषेणपूर्वस्थापितवृषवास्तुप्रतिमामानीय तस्यांसंस्थाप्य गंधादिभि संपूज्य।ॐ पूजितोसिमयावास्तो
होमाद्यैरर्चनै शुभे ॥ प्रसीदपाहिविश्वेशदेहिमेगृहजसुखम् १ वास्तुपुरुषनमस्तेस्तुभूशय्याभिरतप्रभो ।
मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥ २ ॥ इतिप्रार्थयेत् । तत पेटिकामाच्छाद्य तस्मिन्गर्ते शनैर्निधाय ।
सशैलसागरांपृथ्वीं यथावहसिमूर्द्धनि ॥ तथामांवहकल्याण संपत्संततिभि सह ॥ १ इतिप्रार्थ्य तथैवमृदा
गर्तंपूरयेत् । मृदाधिक्येउत्तमफल साम्येमध्यमं न्यूनत्वेऽशुभम् । ततोगर्त्तोपरिगोमयेनोपलिप्य गंधाक्षतपु
ष्पादिभि संपूज्य पुन प्रार्थयेत् । भगवन्देवदेवेशत्वंपितासर्वदेहिनाम् ॥ यज्ञरूपेणभगत्वंस्त्वयाव्याप्तचरा

चरम् ॥ १ ॥ जानताऽजानतावापिशास्त्रोक्तंनकृतंहियत् ॥ तच्चसंपूर्णमेवास्तुप्रसन्नोभवसर्वदा ॥ २ ॥ स्वाग
तंदेवदेवेश मद्भाग्यात्त्वमिहागतः ॥ प्राकृतंत्वंचमांदृष्ट्वाबालवत्प्रतिपालय ॥ ३ ॥ इष्टान्कामान्प्रयच्छत्वंदुरि
ष्टंचविनाशय ॥ पुत्रपौत्रादिवृद्धिंचसततंकुरुदेवनः ॥ ४ ॥ यावच्चंद्रोनगाःसूर्यस्तिष्ठंतिप्रतिपादिताः ॥ तावत्त्व
यात्रदेवेशस्थेयंभक्त्यानुकंपया ॥ ५ ॥ इतिसंप्रार्थ्य नालिकेरंस्थापयेत् । ततः आचार्यादयोयजमानं सप
त्नीकंपुत्रपौत्रादियुतंपूर्ववत् वैदिकैर्मंत्रैःसुरास्त्वामित्यादिपौराणैश्च शांतिकलशोदकेनाभिषिच्यसर्वौषधि
भिरनुलिप्यस्नापयेयुः । अभिषेकानंतरंस्नानवस्त्राणित्यक्त्वाशुक्लमाल्यांबरधरोधृतमंगलतिलकः सपत्नी
कोयजमानः स्वासनेउपविश्य आचम्य आज्यावलोकनंकुर्यात् । ततः अग्नेःपश्चिमतआचार्यंसंपूज्य अलं
कृतांसवत्सांगांवासोयुगंचदक्षिणांदत्त्वा ब्रह्मर्त्विग्भ्योयथाशक्तिदक्षिणांदत्त्वा तेषामाशिषोगृह्णीयात् । ततः
शिख्यादिवास्तुदेवतानांग्रहाणांचपूजांकृत्वाक्षमाप्यदेवताग्निविसर्जनंकुर्यात् । ॐ उत्तिष्ठब्रह्मणस्पते० १ यांतु
तुदेवगणाःसर्वेपूजामादायमामकीम् ॥ इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ २ ॥ इतिदेवान्विसृज्य । आ
चार्यहस्तेकर्मप्रतिपाद्य अग्निंसंपूज्य । गच्छगच्छसुरश्रेष्ठ इत्यग्निंविसृज्य ग्रहपीठवास्तुपीठाद्याचार्यायद

धात् । एवंप्रथमेह्निवास्तुशांतिंविधाय द्वितीयेह्निपूर्वाह्णएवसुमुहूर्त्तेगृहप्रवेशंकुर्यात् । सचेत्थम् । नवजल
पूर्णपल्लवोपेतंदूर्वायुतंसुगंधादिलिप्तंगंधपुष्पमालादिभिरर्चितंवस्त्रवेष्टितंसफलंकलशमंजलिनागृहीत्वा यज
मानो ब्राह्मणान्वित सपत्नीक शुक्लमाल्यानुलेपनस्तादृशपुत्रपौत्रादिसमेत । सुशकुनसूचिताभ्युदय गोब्रा
ह्मणपुर सरस्ते कृतस्वस्त्ययनोमंगलतूर्यगीतशांतिपाठेनतोरणाद्यलंकृतगृहम् ॐ धर्मस्थूणाराजंश्रीस्तू
पमहोरात्रेद्वारफलकेइंद्रस्यगृहावसुमंतो वरूथिनस्तानहंप्रपद्ये सहप्रजयापशुभि सहयन्मे किंचिदस्त्युपहू
त सर्वगण सखाय साधुसंवृत्तस्तांत्वाशालेरिष्टवीरागृहान्न संतुसर्वत १ इतिपठन्प्रविशेत् । अथगृहप्रवे
शांगद्वारशाखादिपूजनम् । स्थापितासिमयाशाखे सुखदाऋद्धिदाभव । पूजितासिमयाभक्त्यास्थापिताच
स्थिराभव १ इतिद्वारशाखांप्रणम्यगंधादिभि संपूज्य । पूर्वे ॐ गणपतयेनम । दक्षिणशाखायां ॐ धात्रे
नम । १ वामशाखायां विधात्रेनम २ इतिपूजयेत् ॥ तत स्तंभपूजनम् । धारयत्वंमहाभागनिर्मितोविश्वक
र्मणा ॥ स्थापित शुभदोनित्यममगेहंक्षमोभव ॥ १ ॥ इतिस्तंभंगंधादिभि संपूज्य । दीपस्थाने । दीपाय
नम इतिदीपंपूजयेत् । ततो दक्षिणबाहौ ॐ दक्षिणबाहवेनमः । वामबाहौ ॐ वामबाहवेनमः । चुल्लीस्थाने

ॐ गंधर्वायनमः । संधानभांडे ॐ ज्येष्ठायैनमः जलस्थाने ॐ वरुणायनमः । पेषिण्यां ॐ सुभगायैनमः
उलूखले ॐ रौद्रपीठायनमः । मुसले ॐ बलभद्रप्रियायप्रहरणायनमः । शयनीये । ॐ कामायनमः ।
पृष्ठे ॐ पुन्नागायनमः । वंशेषु ॐ किन्नरायनमः गृहमध्ये ॐ क्षेत्रपालायनमः । करंडे ॐ रक्षोजनेभ्यो
नमः इतिगृहदेवान्संपूजयेत् गृहप्रवेशानंतरंप्रधानगृहमध्ये धान्योपरितंकलशंस्थापयेत्। ततो गृहस्थैर्पार्थ
पुण्याहंवाचयित्वा शतंशक्त्यावा ब्राह्मणान्भोजयित्वा तेभ्यः शिवंवास्तु इतित्रिरुक्ताशिवंवास्तु इति विप्रा
स्त्रिर्ब्रूयुः ।ततोविप्राशिषोगृहीत्वा सपरिवारः सुहृद्युतोभुंजीत। एवंयःकुरुतेसम्यग्वास्तुपूजांसमाहितः॥धनधा
न्यसमायुक्तोमोदतेचोत्तमैःसुतैः१ गृहादिकरणेयत्रनार्चितावास्तुदेवताः॥तत्रशून्यंभवेत्सर्वंरक्षोविघ्नादिभिर्हरे
त्२तस्माद्वास्त्वर्चनंकार्यंसम्यक्संपदमीप्सुभिः।वित्तशाठ्यंनकुर्वीतयदीच्छेत्क्षेममात्मनः ३ इतिवास्तुशांति
प्रयोगः ॥ अथग्रंथकारान्वयवर्णनम् । वीकाख्यशार्दूलविनिर्मितंयतोलोकांबिकानेरइतिप्रथांगतः । तदंतरे
लेखपुरोपमेपुरे श्रीरत्नदुर्गेनृपदुर्गमेशुभे ॥ १ ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयोबुधजीवराजः ॥
विवृद्धमानोविदुषांसमाजेसुज्ञैर्नरैःसर्वसमृद्धिभाजः ॥२॥तस्यात्मजाबाणमितास्तुसद्गुणाःसुवेदविद्याध्ययनेच

नैपुणा । आयातयातद्विजवद्गृहाङ्गणावीर्येणसंताडितवैरवद्गणा ॥ ३ ॥ पंचस्वययोगुरुरामकृष्णोज्ञानेन चाल्पीकृतसर्वतृष्ण ॥ स्वबुद्धित खंडितवैरिप्रश्न सुमक्तिसतर्पितदेवकृष्ण ॥ ४ ॥ तस्याभवन्नामसिता सुपुत्रा स्वधर्मयायिस्वकलत्रमित्रा । गृहेपुसंलेखितरम्यचित्रा श्रीकान्तपूजानिरता पवित्रा ॥ ५ ॥ इमा निनामानिभवंतितेषां चतुर्भुजाख्योविबुधोऽयमाद्य । कस्तूरिचंद्राभिधसज्जनोऽपरोऽपरोगुणैर्मण्डितजेष्ठरा म ॥ ६ ॥ तत्रस्थितामध्यमपक्षिपादेकस्तूरिचन्द्राख्यमहत्सुशीला ॥तेषांसुपुत्रावनवद्यवंद्यविद्यान्वितोद्वौनि तरामभूताम् ॥ ७ ॥ चतुर्थीलालाह्वयगीष्पतीसुखात्सुबोगुणेनार्दितदुष्टदर्पौ ॥ ज्येष्ठेनतत्रापिमयाचतुर्थीला लेनचाकारिकृति सुशांतिदा ॥८॥ बाणभूताङ्कचंद्रेब्दे १९५५ विक्रमादित्यसंज्ञके॥तपसेशुल्कपंचम्यांग्रंथ पू र्णोऽभवेच्छुभ ॥ ९ ॥ इति श्रीबीकानेरविपयान्तर्गतश्रीरत्नगढनगरनिवासिना श्रीवसिष्ठकुलोद्भवेन श्रीरा मकृष्णपौत्रेण श्रीकस्तूरीचंद्रसूनुना श्रीमहादेवभक्तगौडपंडितश्रीचतुर्थीलाल( चौथमल )शर्मणा विरचिते चातुर्थीलालभास्करे महानिबंधे शांतिविधायके पंचमेप्रकाशेवास्तुशांतिकथन नाम तृतीयं प्रकरणम्॥ ३ ॥

समाप्तोऽयं शांतिप्रकाशो ग्रंथ ॥

अथवास्तुशांतियागोपकरणानि । कुंकुमकेशरचंदनानि । पुष्पाणिविचित्राणि। पुष्पमालाः । वस्त्राणि नानाप्रकाराणि । पीतकौशेयवस्त्रम्।
पंचरजांसि । तंडुलाः । धूपदीपाः । नैवेद्यम् । मोदकपायसकृसरान्नमाषभक्तपूरिकापूपादि । नालिकेरफलानि । ऋतुफलानि । तांबूलानि ।
पूगीफलानि । यज्ञोपवीतानि । आचार्यादिवरणोपकरणानि स्वर्णमुद्रिकासनकमंडलुप्रभृतीनि । ग्रहहोमार्थ अर्कसमिधः ८ पलाशस
मिधः ८ खादिरःस० ८ अपामार्गस० ८ पिप्पलमय्यः० ८ उदुंबरस० ८ शमीसमिधः ८ दूर्वाः ८ कुशाः ८ एताः सर्वाःप्रादेशमात्राःवास्तुहो
मार्थ प्रादेशमात्रा अष्टोत्तरशतसंख्या औदुंबर्यः समिधः। अधिदेवप्रत्यधिदेवलोकपालदिक्पालहोमार्थप्रत्येकमष्टौसंख्यकाः पालाशीःसमि
धः प्रादेशमात्राः। सर्वहोमार्थ तिलाः यवाः तंडुलाः घृतं गव्यं। शर्करागुग्गुल्वादि स्रुक्स्रुवादोनियागोपकरणानि । पूर्णपात्रम्।ग्रहबल्यर्थंगुडोद
नादि । वास्तुदेवताबल्यर्थंपायसादि । अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधसंभवाः-पंचपल्लवाः। मुरामांसीवचाकुष्ठशैलेयरजनीद्वयशठीचंपकमुस्ते
तिसर्वौषध्यः । अश्वस्थानात् गजस्थानात् वल्मीकात् नदीसागरसंगमात् शुष्कह्रदात् राजद्वारात् गोकुलाच्च सप्तमृदः । यवगोधूमतंडु
लतिलकंगुश्यामाकचणकेतिसप्तधान्यानि । दुग्ध, दधि, मधु, पंचामृतं, पंचगव्यं, श्वेतसर्षपाः लाजाः । ताम्रकलशः १ मृन्मयकलशाः वास्तु
प्रतिमा सुवर्णमयी १ स्वर्णशलाका, स्वर्णशकलानि ५ त्रिगुणितरक्तसूत्रं कर्पूरं सिंदूरं गुडं गंगोदकं गोरोचनं कस्तूरिका हरिद्रा तैलं
आम्रपल्लवमाला बिल्वफलानि ५ तद्बीजानि वा बिल्वपत्राणि मुद्गाः माषाः कार्पासवर्तिकाः ५० श्वेतरक्तवस्त्रम् अगरु एला ( इलायची)
शैवालं कदलीस्तंभाः चत्वारो लोहकीलाः ४ छायापात्रं श्वेतरक्तपुष्पाणि रक्तचंदनं अपक्वमृन्मयकुंभः १ काष्ठपेटिका १ पत्रावली
कार्पासः आसनानि गुलाल अभ्रकं प्रणीता प्रोक्षणी आज्यस्थाली चरुस्थाली कांस्यकटोरिका पंचरत्नानि । द्राक्षा आमलकानि आचार्या
दिदक्षिणा । ब्राह्मणभोजनं भूयसीदक्षिणा । इति ।

[ खेमराज श्रीकृष्णदासने निज "श्रीवेङ्कटेश्वर" यन्त्रालयमें मुद्रितकर प्रसिद्ध किया. ]

| | की० रु० आ० |
|---|---|
| संस्कारभास्कर (यजुर्वेदी सब संस्कारोंकी विधि प्रयोग और मंत्र सहित ... ... | २—१२ |
| जन्मदिनपूजापद्धति ... ... ... ... | ०—२ |
| गोदान पद्धति ... ... ... ... | ०—१॥ |
| सकामविधिपूजन विधान भा० टी० ... ... | ०—४ |
| स्वस्तिवाचन (पुण्याहवाचन) ... ... ... | ०—१॥ |
| दशकर्मपद्धति (दशोसंस्कार) | ०—७ |
| वासिष्ठीहवनपद्धति ... | ०—४ |
| लंबोदरीहवनपद्धति ... | ०—४ |
| एकोद्दिष्टश्राद्धप्रयोग ... | —२ |
| पार्वणश्राद्धप्रयोग ... ... | ०—२ |
| उपाकर्मपद्धति (माध्यन्दिनयजुर्वेदकी) ... | ०—११ |
| धर्मविपाकचरणगत रफ १० आना ग्लेज ... | ०—१२ |

| | की० रु०आ० |
|---|---|
| कर्मविपाक भाषाटीका ... ... ... ... ... | १—४ |
| वेदोक्त वास्तुपद्धति ... ... | ०—६ |
| व्रतोद्यापनकौमुदी ... ... ... | ०—१२ |
| दानसंग्रह सब प्रकारके दानकी विधि है ... ... | १—४ |
| सर्वदेवप्रतिष्ठासंग्रह पं० रामलालजी कृत शास्त्रोक्त (प्रतिष्ठा करानेका ऐसा ग्रंथ आजतक अन्यत्र नहीं छपा) ... ... | २—० |
| विवाहपद्धति मूल बड़े अक्षरोंकी ... | ०—६ |
| यज्ञोपवीत मूल ... ... | ०—२ |
| तथा भाषाटीका ... ... ... | ०—८ |
| नवरत्नविवाहपद्धति भाषाटीकासह | १—४ |
| वैवाहपद्यावली (मोतनी अर्थात् विमतीमें कहने योग्य) दोनों पक्षके श्लोक भाषाटीका | ०—१२ |

# शांतिप्रकाशस्यशुद्धयशुद्धिविवेचकपत्रम् ।

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ३ | १ | १० | प्रणम्यादौ | मणीभ्यादौ |
| ३ | २ | १ | कुरुमदेव | कुरुमेदेव |
| ३ | २ | ११ | राशिस्येसूर्यं | राशिस्थेसूर्ये |
| ६ | २ | ९ | अरवनस्त्वामिन्द्र | असनस्त्वामिन्द्र |
| ८ | १ | ८ | कारण | करण |
| ८ | १ | ६ | शोभना | शोभना. |
| ८ | १ | ६ | तमहमोंकारादिं | तमहमोंकार |
| | | | | मादि |
| ८ | १ | ७ | भद्रम्पश्यर्मीक्षभियेजत्रा | भद्रम्पश्येमाक्ष-भिर्यजत्राः |
| ८ | २ | २ | त्वीरवतीशन्नो | त्वीरवतीमिशन्नो |
| ८ | २ | ३ | सवितान | सवितानः |
| ८ | २ | ६ | भजतोवासोदा | भजतेवासोदाः |
| ११ | १ | २ | कमुत्क्मना | कमुतत्क्मना |
| ११ | १ | ३ | द्विपदेचतुष्पदे | द्विपदेशंचतुष्पदे |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| ११ | १ | ५ | नाभिषिञ्चति | नाभिषिचति |
| ११ | १ | ५ | शांति'रापः | शांतिराप |
| ११ | १ | ७ | कुरुशन्त | कुरुशन्न. |
| ११ | १ | १० | देववस्य | देवस्य |
| ११ | १ | ९ | अनाधृष्ठा | अनाधृष्टा |
| ११ | १ | १० | रुपारिष्ठा | रुपारिष्टा |
| ११ | २ | १ | स्याहि | स्पाहि |
| १२ | १ | ७ | सुश्वकामधुक्ष' | सुधाकामधुक्षः |
| १४ | २ | १ | शात्याख्या | शांत्याख्ये |
| १५ | २ | ७ | अकारिय | अकारिष |
| १६ | १ | १ | दृठेह | दृठेह |
| १८ | १ | ८ | बुधदक्षिपार्श्वे | बुधदक्षिणपार्श्वे |
| १८ | २ | १ | नाश्रु. | नाशु |
| १९ | २ | ३ | वोयो | वायो |
| २० | २ | १० | उपस्त्यमे | उपस्त्थेमे |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|
| २४ | १ | ८ | सुधाकाम | सुप्वाकाम |
| २५ | १ | ६ | विश्वस्यरिष्टचै | विश्वस्यारिष्टचै |
| २५ | १ | १० | श्रहेति | महेति |
| २५ | २ | ६ | ममु॑स्य | समुद्रस्य |
| २६ | १ | ४ | पथायस्ते | पर्थायस्ते |
| २६ | २ | ४ | धाम्नाराजँ | धाम्नोधाम्नोराजँ |
| २७ | २ | १० | अधिस्तुपु | अधिस्तुषु |
| ३० | १ | ४ | असचरो | असचरे |
| ३१ | १ | ५ | दुद्धुध्यस्वा | उद्बुध्यस्वा |
| ३२ | १ | २ | सयोपा | सजोषा |
| ३२ | १ | २ | नुदरवाथा | नुदस्वाथा |
| ३४ | २ | २ | यत्वेमहे | यत्वेमहे |
| ३८ | १ | ४ | गुह्य | गुह्य |
| ३८ | २ | ३ | अञ्ञाना | अन्न्यज्ञाना |
| ३८ | २ | ४ | भद्राऽद्रविणानि | भद्राद्रविणानि |

| पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९१ | १ | ६ | मागता. | मागताः | ९३ | २ | १ | वसुभ्य | वसुभ्य | ९४ | २ | ६ | घृतव. | घृतप्व' |
| ९१ | १ | ६ | हेमरूप | हेमरूप्य | ९३ | २ | ९ | पतयेते | पतयते | ९५ | १ | ८ | दपतिर्वा | दंपतीवा |
| ९२ | २ | ७ | नकु | नकु | ९३ | २ | १० | आसूर्य | ओंसूर्य | ९५ | १ | १० | इद्रंसुत्रा | इंद्र सुत्रा |
| ९२ | २ | ११ | आर्तिर्वा | आर्तिर्वा | ९४ | १ | ६ | घशर्ठ० | घशर्ठ० | ९६ | १ | ११ | अर्यमणं | ओं अर्यमणं |
| ९३ | १ | ५ | मतीतृपन्त | तीतृपंत | ९४ | २ | २ | श्रवन्तु | अवन्तु | ९६ | २ | ४ | किम्पुरुषं | किम्पूरुष |
| ९३ | १ | ८ | सुषुम्णाः | सुषुम्ण' | | | | | | | | | | |

इति.



# विक्रय्यपुस्तकोंकी संक्षिप्त–सूची

| पुस्तक | की० रु० आ० |
|---|---|
| ज्येष्ठाशांति | ०—१॥ |
| पंचकशांति | —२ |
| नवग्रहविधानपद्धति | ०—४ |
| जलोत्सर्गप्रकाश–वापी, कूप, तडागादिका उ | १—१२ |
| तुलसीविवाहपद्धति | ०—३ |
| शूद्रविवाहपद्धति | —३ |
| मर्पबसारविवेक | १— |
| अंत्येष्टयर्क–यजुर्वेदीय प्रेतकार्यका अत्यंत उपयोगी ग्रंथ | १—० |
| नित्यतंत्र भाषा टीका | ०—११ |
| पार्वणश्राद्धपद्धति भाषाटीका | ०—४ |
| एकोद्दिष्टश्राद्धपद्धति भाषाटीका | ०—३ |
| नवग्रहकाण्डी ( नित्यपूजाविधानपद्धति ) | —२ |
| धरवृगणेशपूजा | ०—१॥ |
| वृद्धिश्राद्ध ( नान्दीमुख ) | ०—४ |
| संध्यायजुर्वेदी मूल १॥ आ० और भाषाटीका | ०—१॥ |
| श्राद्धप्रकाश(जिसमें गौड़ ब्राह्मणोंके श्राद्धोंसे लेकर शूद्रश्राद्धों पर्यंत श्राद्धमात्रके निर्णय और पद्धतियाँ ऐसी रीतिसे कही हैं कि श्राद्ध विषयका अन्य ग्रंथ ऐसा नहीं ) | १—० |
| सन्ध्याभाष्य तीन टीकाओं समेत | ०—६ |
| संध्यावैष्णवी | ०—१ |
| क्षत्रियसंध्या | ०—१ |
| वैश्यसंध्या | ०—१ |
| कात्यायनी तर्पण | ०—१॥ |
| नित्यकर्मपद्धति | —१ |

मिलनेका पता–खेमराज श्रीकृष्णदास "श्रीवेङ्कटेश्वर" छापाखाना–बंबई

